कर्तव्यमिति कथितमाकर्ण्य श्रुत्वा तथा सभ्यानां चा दूतस्य च मतं जरासन्धविजयार्थमेव गन्तव्यमिति कृष्णस्य च मतम् उभयमेव कर्तव्यमिति तदाज्ञाय ज्ञात्वा महामतिः उद्धवः अब्रवीत् ॥ १ ॥ यदुक्तमिति ॥ हे देव ऋषिणा नारदेन यक्ष्यतः यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य युधिष्ठिरस्य साचिव्यं साहाय्यं कर्तव्यमिति यदुक्तं तत्त्वया कार्यं तथा शरणैषिणां शरणार्थिनां राज्ञां रक्षा च त्वया कार्या ॥ २ ॥ यष्टव्यमिति ॥ हे विभो दिक्चक्रजयिना पुरुषेण राजसूयेन यष्टव्यमतो दिग्विजयप्रसङ्गात् यो जरासुतस्य जयः स उभयार्थः राजसूयार्थः शरणागतरक्षार्थश्च मम सम्मतः । तथा हि दिग्विजयं विना न राजसूयसिद्धिः जरासन्धवधं विना न दिग्विजयः अतः प्रथमं राजसूयनिमन्त्रणमेव ग्राह्यं राजरक्षानिमन्त्रणं तु तदङ्गतयैव सेत्स्यति इति ॥ ३ ॥ अस्माकमिति ॥ हे गोविन्द एतेन राजसूयनिमन्त्रणाङ्गीकारेणैवास्माकमपि महान् अर्थः जरासन्धवधरूपो भविष्यति तथा बद्धान् राज्ञो विमुञ्चतो विमोचयतस्तव यशश्च भविष्यति ॥ ४ ॥ गन्तव्यमिति ॥ प्राक्षिप्तः श्लोकः ॥ ५ ॥ स वै इति ॥ स वै प्रसिद्धो

उद्धव उवाच ॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया ॥ कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो ॥ अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति ॥ यशश्च तव गोविन्द राज्ञो बद्धान्विमुञ्चतः ॥४॥ गन्तव्यं पूर्वमस्माभिरिन्द्रप्रस्थमितस्ततः ॥ तत्रैव तेनानुज्ञातस्तदर्थं जहि मागधम् ॥ ५ ॥ स वै दुर्विषहो राजा नागायुतसमो बले ॥ बलिनामपि चान्येषां भीमं समबलं विना ॥ ६ ॥ द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः ॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित् ॥ ७ ॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ॥ हनिष्यति न सन्देहो द्वैरथे तव संनिधौ ॥ ८ ॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः ॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ९ ॥

राजा जरासन्धः बले नागानां गजानामयुतेन समः तुल्यः अतः समं तुल्यं बलं यस्य तं भीमं विना विहायान्येषां बलिनामपि दुर्विषहः दुःखेनापि सोढुमशक्यवेगः भीमादेव तस्य मृत्युर्बृहस्पतिमुखाच्छ्रुत इति भावः ॥६॥ द्वैरथ इति ॥ स तु जरासन्धः भीमेनापि द्वैरथे द्वन्द्वयुद्धे जेतव्यः शतेनाक्षौहिणीभिर्युतो मा जेतव्यः राजवृन्दक्षोभप्रसक्तेः । तद्घाते तु यागशोभाविक्षेपात् स च ब्रह्मण्यः ब्राह्मणभक्तः अतो विप्रैरभ्यर्थितः याचितः कर्हिचिदपि न प्रत्याख्याति न निराकरोति ॥७॥ ब्रह्मेति ॥ ब्राह्मणवेषस्य धरो वृकोदरो भीमस्तं प्रति गत्वा द्वन्द्वयुद्धं भिक्षेत याचतां तव सन्निधौ तवैव प्रभावात्समबलोऽपि भीमस्तं द्वैरथे युद्धे हनिष्यत्येव न जयमात्रम् इत्यत्र सन्देहो नास्ति ॥ ८ ॥ तव सन्निधिमात्रेण कार्यं सेत्स्यतीत्याशयेनाह–निमित्तमिति ॥ यथा विश्वस्य सर्गे हिरण्यगर्भः ब्रह्मा निरोधे प्रलये शर्वः रुद्रश्च परं केवलं निमित्तम् अवान्तरकर्ता वस्तुतस्तु ईशस्य कालस्य अरूपिणस्तवैव कर्तृत्वं तथात्रापि भीमो निमित्तमात्रं वस्तुतो निहन्ता त्वमेव ॥ ९ ॥

गायन्तीति ॥ जरासन्धनिगृहीतानां राज्ञां देव्यः पत्न्यः स्वगृहेषु बालकलालनादौ स्वशत्रोर्जरासन्धस्य वधम् आत्मनां आत्मवत्प्रेष्ठानां पतीनां विमोक्षणं च ते तव विशदं सत्कीर्तिकरं कर्म हे वत्स मा रोदीः श्रीकृष्ण एवं करिष्यतीति गायन्ति तत्र दृष्टान्तानाह यथा ।गोप्यः स्वशत्रुशङ्खचूडवधं स्वमोक्षणं च गायन्ति । यथा चावतारान्तरगतं नक्रवधं ततः कुञ्जरपतेर्गजेन्द्रस्य मोक्षणं च यथा च रावणवधं ततो जनकात्मजायाः सीताया विमोक्षणं च यथा च कंसवधं ततः पित्रोर्देवकीवसुदेवयोर्विमोक्षणं च मुनयो लब्धशरणा वयम् अस्मदादयो भक्ताश्च गायन्ति तथेत्यर्थः । महासभायां गोपीनां प्रस्तावो यशोदादीनामेव सभ्येषु भानान्न दोषायेति ज्ञेयम् ॥ १० ॥ जरेति ॥ हे कृष्ण जरासन्धस्य वधो भूर्यर्थाय " भक्तद्रोही विनश्यति " इति न मे भक्तः प्रणश्यति " इति । च तव प्रतिज्ञासिद्धिः शरणागतरक्षा राजसूययज्ञः तव सत्कीर्तिः पूर्ववैरप्रतीकारः भूभारनिवृत्तिश्चेत्यनेकप्रयोजनाय उपकल्पते भविष्यतीति अतो राजसूयार्थमेव प्रथमं गन्तव्यमित्यभिप्रायेणाह । प्राय इति । प्रायः पच्यते इति पाकः पुण्यपापात्मकं कर्म तस्य विपाकः फलं तेन राज्ञां पुण्यविपाकेन जरासन्धस्य पापविपाकेन च । यद्वा । पाको राजसूयानुष्ठानं तस्य विपाकः पाण्डवानां निष्कण्टकराज्यप्राप्तिस्तेन हेतुना पाप-

गायन्ति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च॥ गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च ॥ १० ॥ जरासन्धवधः कृष्ण भूर्यर्थायोपकल्पते॥ प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥११॥ श्रीशुक उवाच ॥ इत्युद्धववचो राजन्सर्वतोभद्रमच्युतम् ॥ देवर्षिर्यदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥ १२ ॥ अथादिशत्प्रयाणाय भगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्य गुरून्विभुः ॥ १३ ॥ निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ॥ सूतोपनीतं स्वरथमारुहद्गरुडध्वजम् ॥ १४ ॥

विपाकेनेति पाठे तु जरासन्धस्य पापफलेन हेतुना यद्वा पापानां शिशुपालदुर्योधनादीनां विपाकेन नाशरूपेणेत्यर्थः । अयं क्रतुः राजसूयस्तवाप्यभिमतः सम्मतः चकारात् युधिष्ठिरादेरभिमतः तत्र त्वयि गते सर्वं भविष्यतीति भावः ॥ ११ ॥ इतीति ॥ हे राजन् सर्वतोभद्रं शुभावहम् अच्युतं बाधशून्यं फलाव्यभिचारितमुपपत्त्या वृद्धं वा इत्येवमुक्तप्रकारकमुद्धववचः देवर्ष्यादयः सर्वे प्रत्यपूजयन् साधूक्तमित्यन्वमोदन्त । यदुवृद्धा इत्युक्त्या युयुत्सवस्तु तथा नान्वमोदन्तेत्याशयः । अत्राच्युतमित्यत्र अच्युत इति कृष्णस्येत्यत्र रामस्येति च पाठभेदः ॥१२॥ अथेति ॥ अथ भगवान् विभुः देवकीसुतः गुरून् वसुदेवादीन् अनुज्ञाप्य अनुज्ञां संप्रार्थ्य दारुकजैत्रादीन् स्वभृत्यान् प्रयाणाय गमनसाधनसङ्ग्रहाय आदिशत् आज्ञापयामास ॥ १३ ॥ निर्गमय्येति सार्द्धम् ॥ हे शत्रुहन् गरुडध्वजः सङ्कर्षणं यदुराजम् उग्रसेनं चानुज्ञाप्य पृष्ट्वा सुतैः सहितान् सुतपदं पौत्रकन्यास्नुषाद्युपलक्षणम् । परिच्छदैः शय्यादिपरिकरैश्च सहितान् स्वानवरोधान् अन्तःपुरस्थान् दारान् निर्गमय्य तेषामपि निमन्त्रितत्वात् औत्सुक्याच्च पुराद्बहिर्

मथित्वा सूतेनोपनीतं स्वरथमारुहत् । च्लेरङ् छान्दसः ॥ १४ ॥ तत इति ॥ ततश्च रथद्विपादिनायकैः करालया परमभयंकर्या आत्मसेनया परिवृतो मृदङ्गादिभिः वाद्यैः यः प्रघोषस्तेन घोषिता या ककुब् दिक् तस्याः सकाशात् यद्वा ककुभशब्देन टाबन्तेन बहुव्रीहौ भगवद्विशेषणम् । आन्तककुभशब्देन बहुव्रीहौ अध्याहृत-पुरीविशेषणं वा निराक्रमत् निष्क्रान्तवान् दीर्घाभाव आर्षः । रुचिराछन्दःपञ्चकम् ॥ १५ ॥ नृवाजीति ॥ सहात्मजा वराणि श्रेष्ठान्यम्बरादीनि यासां ताः असिचर्मणी पाण्योर्येषां तैः नृभिः सुसम्यक् संवृताः सुव्रताः पतिव्रतारुक्मिण्यादयः प्रयान्तमच्युतं पतिं नृभिः नरवाहनैः वाजिभिरश्वैश्च तद्विशेषैः काञ्चनशिबिकाभिश्च । यद्वा।नर एव वाजिवच्छीघ्रगा यत्र ताभिः काञ्चनशिबिकाभिरनुययुः ॥ १६ ॥ नरेति ॥ कटकुटयः उशीरादितृणमयकटनिर्मितगृहाः कम्बलाम्बरादयश्चोपस्कराः कुड्यादिरूपाः शिबि-रादिसाधनभूता यासां ताः स्वलङ्कृताः परिजनयोषितो वारयोषितो वेश्याश्च सर्वशः सर्वानेवोपस्करान् सर्वत इत्यपि पाठः । अधियुज्य बलीवर्दादिषु तानुपस्करान्

ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ॥ मृदङ्गभेर्यानकशङ्खगोमुखैः प्रघोषघोषितककुभो निराक्रमत् ॥ १५ ॥
नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ॥ वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥१६॥
नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ॥ स्वलंकृताः कटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वतः ॥ १७ ॥
बलं बृहद्ध्वजपटछत्त्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांऽशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १८ ॥
अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ॥ निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसन्दर्शननिर्वृतेन्द्रियः॥१९॥
राजदूतमुवाचेदं भगवान्प्रीणयन्गिरा ॥ मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ २० ॥

दृढं सन्नह्य नरो नरवाह्यं यानम् उष्ट्राद्याः स्फुटाः अश्वतरी गर्दभादश्वायां जाता अनः शकटं करेणुर्गजी इत्यादिभिः यानैर्ययुः ॥१७॥ बलमिति ॥ तुमुलः संकीर्णः रवः स्वनो यस्मिंस्तद्बलं सैन्यं दिवा दिने बृहद्ध्वजपटादिभिः वरायुधादिभिः रवेः सूर्यस्यांशुभिश्च बभौ । पटछत्रेत्यत्र तुगभाव आर्षः । यथा क्षुभितैस्तिमिङ्गिलैः मत्स्यनक्रादिभिरू-र्मिभिश्च यथार्णवः समुद्रो भाति तद्वदिति तत्र हस्त्यश्वनरादीनां मत्स्यादिसाम्यं ध्वजादीनामूर्मिसाम्यं च बोध्यम् ॥ १८ ॥ अथो इति॥अथो निर्गमानन्तरं यदुपतिना कृष्णेन सभाजितः सत्कृतः आहृतं समर्पितम् अर्हणं पूजासाधनं यस्मै सः मुकुन्दस्य संदर्शनेन निर्वृतानि सुखितानीन्द्रियाणि यस्य सः मुनिस्तस्य व्यवसितं राजसूयाद्यर्थगमन-निश्चयं निशम्य आलक्ष्य तं प्रणम्य तमेव हृदि विदधत् ध्यायन् विहायसा आकाशमार्गेण ययौ इति शेषः ॥ १९ ॥ राजेति ॥ ततो भगवान् गिरा प्रीणयन् राजदूत-मिदमुवाच । हे दूत मा भैष्ट वो युष्माकं भद्रं भूयात् बहुत्वं राजाभिप्रायेण । मागधं घातयिष्यामि इति राज्ञः प्रति कथयेति शेषः ॥ २० ॥

इतीति ॥ इत्येवं भगवतोक्तः प्रस्थितश्च दूतः नृपान् प्रति यथावत् भगवदुक्तं सर्वमवदत् । तेऽपि च शौरेः कृष्णस्य संदर्शनं प्रत्यैक्षन् प्रतीक्षितवन्तः । तद्भाव आर्षः । यतो जरासन्धबन्धात् संसाराच्च मुमुक्षवः ॥ २१ ॥ आनर्तेति ॥ हरिः आनर्तादीन् देशान् विनशनं कुरुक्षेत्रं च तीर्त्वा अतिक्रम्य तदतिक्रमणेन तन्मार्गस्थान् गिरिनदी-पुरादीन् अतीयाय कुरुक्षेत्रपाञ्चालादीनाममार्गगत्वेपि तत्रत्यभक्तानुग्रहार्थं गमनम् ॥ २२ ॥ तत इति ॥ अथ ततो मुकुन्दः दृषद्वतीं तीर्त्वा अथ सरस्वतीं पाञ्चालान्म-त्स्यांश्च तीर्त्वा अथ शक्रप्रस्थमिन्द्रप्रस्थमागमत् ॥ २३ ॥ तमिति ॥ नृणां दुर्लभं दर्शनं यस्य तं श्रीकृष्णमुप समीपमागतमाकर्ण्य श्रुत्वा प्रीतः प्रसन्नचित्तः उपाध्यायेन सहितः सुहृद्भिः वृतः अजातशत्रुर्युधिष्ठिरस्तमानेतुं पुरान्निरगात् ॥ २४ ॥ गीतेति ॥ गीतानि वादित्राणि वाद्यानि च तद्घोषेण तथा भूयसा महता ब्रह्मणः वेदस्य घोषेण च सह स युधिष्ठिरः आदृतः सादरः सन् हृषीकेशं कृष्णमभ्ययात् सम्मुखमाजगाम । यथा मूर्च्छापगमानन्तरं प्राणाः इन्द्रियाणि मुख्यं प्राणमभियान्ति तं च प्राप्य

**इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ॥ तेऽपि संदर्शनं शौरेः प्रत्यैक्षंश्च मुमुक्षवः ॥ २१ ॥ आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ॥ गिरी-न्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २२ ॥ ततो दृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ॥ पाञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २३ ॥ तमुपागतमाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥ २४ ॥ गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ अभ्य-यात्स हृषीकेशं प्राणः प्राणमिवादृतः ॥ २५ ॥ दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ॥ चिराद् दृष्टं प्रियतमं सस्वजेऽथ पुनः पुनः ॥ २६ ॥ दोर्भ्यां परिष्वज्य रमाऽमलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ॥ लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २७ ॥ तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजवाकुलेन्द्रियः ॥ यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २८ ॥**

सचेष्टानि भवन्ति तथा ॥ २५ ॥ दृष्ट्वेति ॥ स्नेहेन विक्लिन्नम् आर्द्रं हृदयं यस्य स पाण्डवो युधिष्ठिरः प्रियतमं तं चिरात् बहुकालानन्तरं दृष्टं कृष्णं दृष्ट्वाऽथ पुनः पुनः सस्वजे आलिङ्गितवान् ॥ २६ ॥ दोर्भ्यामिति ॥ दोर्भ्यां भुजाभ्यां रमाया अमलं निर्दोषम् आलयं मुकुन्दस्य गात्रं परिष्वज्यालिङ्ग्य हतम् अशुभं पापं यस्य सः अत एव अश्रूणि आनन्दजलानि लोचनयोर्यस्य सः हृष्यन्ती उदञ्चितरोमा तनुर्यस्य सः विस्मृतो लोकविभ्रमो लोकव्यवहारो येन स नृपतिर्युधिष्ठिरः परां निर्वृतिं परमानन्दं लेभे ॥ २७ ॥ तमिति ॥ मातुलेयं मातुलपुत्रं तं कृष्णं परिरभ्य निर्वृतः परमानन्दपूर्णो भीमः स्मयन् स्मितं कुर्वन् शता आर्षः । प्रेमजलैरानन्दाश्रुभिराकुले पिहिते इन्द्रिये लोचने यस्य तथाभूतो बभूवेति शेषः । प्रेमजवेति वा पाठः । तथा यमौ नकुलसहदेवौ किरीटी अर्जुनश्च मुदा हर्षेण प्रवृद्धानि बाष्पाणि आनन्दाश्रूणि येषां तेऽपि सुहृत्तममच्युतं कृष्णं परिरेभिरे ॥ २८ ॥

अर्जुनेनेति सार्द्धम् ॥ अर्जुनेन केवलं परिष्वक्त एव समवयस्कत्वात् पादौ पतन्नर्जुनस्तेन हस्ताभ्यां धृत इत्याशयः । यमाभ्यां त्वभिवादितश्च भगवान् ब्राह्मणेभ्यो वृद्धेभ्यः वयोधिकेभ्यो युधिष्ठिरादिभ्यो यथार्हतः यथायोग्यं नमस्कृत्य तैः सम्मानितः कुर्वादीन् मानयामास ॥ २९ ॥ सूतेति सार्द्धम् ॥ मृदङ्गादिशब्दैः सह सूतमागधबन्दिनो ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुश्च ॥ ३० ॥ ३१ ॥ एवमिति ॥ पुण्यावहः श्लोको यशो येषां तेषां शिखामणिरिव श्रेष्ठो भगवान् एवं सुहृद्भिर्युधिष्ठिरादिभिः पर्यस्तः परिवृतः सूतादिभिः संस्तूयमानश्चालङ्कृतं हस्तिनापुरं विवेश ॥ ३२ ॥ पुरं विशिनष्टि—संसिक्तेति ॥ करिणां गजानां मदगन्धयुक्तैस्तोयैर्जलैः संसिक्तानि वर्त्मानि पुरवीथयो यस्मिंस्तत् चित्रध्वजैः कनकतोरणैः परिपूर्णकुम्भैः तथा मृष्टः आत्मा शरीरं येषां तैः तथा नवा दुकूलादयो येषां तैर्नृभिः तथाभूताभिर्युवतिभिश्च विराजमानम् उद्दीप्तेति प्रतिसद्म उद्दीप्तैर्दीपैः बलिभिः पुष्पादिप्रकारैश्च जुष्टं जालेभ्यो गवाक्षेभ्यो निर्यातैर्धूपै रुचिरं शोभितं विलसन्त्यः पताका यस्मिंस्तत मूर्धन्याः मूर्ध्नि भवा हेमकलशा

**अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ॥ ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथाऽर्हतः ॥ मानितो मानयामास कुरुसृञ्जयकेकयान् ॥ २९ ॥ सूतमागधगन्धर्वान्वन्दिनश्चोपमन्त्रिणः ॥३०॥ मृदङ्गशङ्खपटहवीणापणवगोमुखैः ॥ ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३१ ॥ एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ॥ संस्तूयमानो भगवान्विवेशाऽलंकृतं पुरम् ॥ ३२ ॥ संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३३ ॥ उद्दीप्तदीपबलिभिः प्रतिसद्मजालनिर्यातधूपरुचिरं विलसत्पताकम् ॥ मूर्धन्यहेमकलशै रजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३४ ॥ प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः ॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३५ ॥ तस्मिन्सुसङ्कुलइभाश्वरथद्विपाद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३६ ॥**

येषां तैः रजतमयानि उरूणि स्थूलानि शृङ्गाणि कलशाधस्तनभूमिका येषां तैर्भवनैश्च जुष्टं कुरुराजस्य युधिष्ठिरस्य धाम अन्तःपुरं भगवान् दूरत एव ददर्श ॥ ३३ ॥ ॥ ३४ ॥ प्राप्तमिति ॥ नराणां सर्वलोकानां यानि लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं कृष्णं प्राप्तं निशम्य श्रुत्वा औत्सुक्याद्विश्लथिताः केशानां दुकूलानां च बन्धा ग्रन्थयो यासां ता युवतयः सद्य एव गृहकर्मतल्पे शय्यायां सुतान् पतींश्च विसृज्य त्यक्त्वा नरेन्द्रमार्गे राजमार्गे द्रष्टुं ययुः स्मेति पादपूर्तौ ॥ ३५ ॥ तस्मिन्निति ॥ गृहप्रासादादिषु अधिरूढा नार्यः इभादिभिश्चतुर्भिः सेनाङ्गैः सुसंकुले संकीर्णे तस्मिन्नरेन्द्रमार्गे सभार्यं कृष्णम् उपलभ्य दृष्ट्वा कुसुमैर्विकीर्य मनसा उपगुह्यालिङ्ग्य उत्स्मययुक्तेन तदीक्षितेनैव सुस्वागतं विदधुः स्वागतप्रश्नं चक्रुः । तासामुत्स्मितवीक्षितं स्वागतप्रश्नं विदधदिवास ॥ ३६ ॥

ऊचुरिति ॥ उडुपं चन्द्रं सहन्ते ताश्चन्द्रसहितास्तारा इव स्थिता मुकुन्दपत्नीः पथि निरीक्ष्य ताः स्त्रिय ऊचुः तदुक्तिमाह । किमिति यासां चक्षुषां पुरुषमौलिः पुरुषोत्तमः उदारः सर्वमनोरथपूरको यो हासस्तद्युक्तो यो लीलावलोकस्तस्य कलया लेशेन उत्सवं सुखमातनोति ताभिरमूभिः मुकुन्दपत्नीभिः किं सुकृतमकारि कृतम् ॥ ३७॥ तत्रेति॥तत्र तत्र मार्गे हृतम् एनः पापं येषां ते मङ्गलानि गन्धपुष्पताम्बूलादिशुभद्रव्याणि पाण्योर्येषां ते पौराः पुरवासिनः श्रेणीषु एकशिल्पोपजीविजनतासु मुख्याश्च उपसङ्गम्य समीपमागत्य कृष्णस्य सपर्यां पूजां चक्रुः कृष्णायेत्यपि पाठः ॥ ३८ ॥ अन्तरिति ॥ संभ्रमेण सहितैः फुल्ले विकसिते लोचने येषां तैरन्तःपुरजनैः प्रीत्याऽभ्युपेतः अभ्युपगम्य सत्कृतः मुकुन्दो राजमन्दिरं प्राविशत् ॥ ३९ ॥ पृथेति ॥ पृथा कुन्ती त्रिभुवनेश्वरं भ्रात्रेयं भ्रातृपुत्रं कृष्णमवलोक्य प्रीतः आत्मा मनो यस्याः सा पर्यङ्कादुत्थाय स्नुषया द्रौपद्या सह स्थिता सा कुन्त्येव तं परिषस्वजे आलिङ्गितवती । द्रौपदी तु पश्चादेव स्थिता वन्दनादिनादृतवतीत्यग्रे वक्ष्यते।एवं चाध्याहृतायां स्थितिक्रियायामन्वितत्वात्सस्नुषेति

ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः ॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३७ ॥ तत्र तत्रोपसंगम्य पौरा मङ्गलपाणयः ॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हृतैनसः ॥ ३८ ॥ अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३९ ॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ४० ॥ गोविन्दं गृहमानीय देवदेवेशमादृतः ॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः ॥ ४१ ॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम् ॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः ॥४२॥ श्वश्र्वा सञ्चोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ॥ आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४३ ॥ कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ॥ अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः ॥ ४४ ॥

समासः ॥ ४० ॥ गोविन्दमिति ॥ प्रमोदेनोपहतः अभिभूत आदृतः आदरयुक्तो नृपो युधिष्ठिरः देवदेवेशं गोविन्दं गृहमानीय तत्पूजायां कृत्यं क्रमविशेषं नाविदत् विस्मृतवान् । विन्दतेर्लुङ् ॥ ४१ ॥ पित्रिति ॥ हे राजन् कृष्णः पितृष्वसुः पृथायाः गुरुस्त्रीणां ब्राह्मणादिपूज्यस्त्रीणां चाभिवादनं चक्रे । स्वयं च कृष्णया द्रौपद्या भगिन्या सुभद्रया च अभिवन्दितो बभूव ॥ ४२ ॥ श्वश्र्वेति युग्मम् ॥ श्वश्र्वा कुन्त्या संचोदिता कृष्णा द्रौपदी रुक्मिण्यादिकाः सर्वशः सर्वाः कृष्णपत्नीः शैब्यामिति मित्रविन्दाया एव विशेषणम् । तथापदेन लक्ष्मणा गृहीता वासःस्रङ्मण्डनादिभिः आनर्च पूजितवती मण्डनं कुङ्कुमादि तथा अन्याश्च या अभ्यागताः स्त्रियस्ताश्च चात् स्नुषादाः कन्याश्च वस्त्रादिभिरानर्च ॥ ४३ ॥ ४४ ॥

सुखमिति ॥ धर्मराजो युधिष्ठिरः प्रत्यहं नवं नवं यथा भवति तथा सैन्यादिसहितं जनार्दनं श्रीकृष्णं सुखं तस्य प्रीत्यनुरूपं यथा स्यात्तथा निवासयामास ॥ ४५ ॥ तर्पयित्वेति युग्मम् ॥ फाल्गुनसंयुतः अर्जुनसहायभूतो भगवान् खाण्डवेनेन्द्रोपवनेन वह्निं तर्पयित्वा तथा येनोपकारगुणज्ञेन मयेन युधिष्ठिराय दिव्या सभा कृता अर्पिता इति वा पाठः । तं खाण्डवाग्नौ दह्यमानं मयं दैत्यशिल्पिनं मोचयित्वा राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छया अर्जुनेन रथमारुह्य भटैर्वृतो विहरन् कतिचिन् मासांस्तत्रैवो-वास । परे तु तर्पयित्वेति श्लोकस्य यो नित्यं फाल्गुनसंयुतः आसीत् येन च खाण्डवेनाग्निं तर्पयित्वा तत्र मयासुरं मोचयित्वा तद्द्वारा युधिष्ठिराय दिव्या सभा कृता तं तादृशं जनार्दनं निवासयामासेति पूर्वेणान्वयः इत्याहुः । अनेन राज्ञः कृष्णोपकारानुस्मरणम् । दिव्यत्वात्सभाया यथामनोरथं सर्वावकाशसम्पादनं च दर्शितम् । अत्र चक्रवर्ती । तर्पयित्वेत्यादिश्लोकद्वयेनाष्टपञ्चाशत्तमाध्यायप्रोक्तैव कथा पुनस्तत्रावेशादेवानुकथिता ततश्चायं क्रमः इन्द्रप्रस्थे खाण्डवदाहः कालिन्दीप्राप्तिः चातुर्मास्यवासः

सुखं निवासयामास धर्मराजो जनार्दनम् ॥ ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४५ ॥ तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४६ ॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया ॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः ॥४७॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥ श्रीशुक उवाच ॥ एकदा तु सभामध्य आस्थितो मुनि-भिर्वृतः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः ॥ १ ॥ आचार्यैः कुलवृद्धैश्च ज्ञातिसंबन्धिबान्धवैः ॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह ॥ २ ॥ युधिष्ठिर उवाच ॥ क्रतुराजेन गोविन्द राजसूयेन पावनीः ॥ यक्ष्ये विभूतीर्भवतस्तत्सम्पादय नः प्रभो ॥ ३ ॥ त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ॥ विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये ॥ ४ ॥

द्वारकागमनं कालिन्दीभद्रादिविवाहः नरकवधादिबहुकथान्त एव राजसूयनिमन्त्रणादिः ॥ ४६ ॥ ४७ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमैकसप्ततितमे व्यधात् ॥ ७१ ॥ द्वासप्ततितमे राजसूयकार्ये विनिश्चिते ॥ जरासन्धमहन्भीमः श्लोका अत्राङ्कवार्द्धयः ॥ उवाचर्षट्कं पादोनात्रिंशच्चाशदनुष्टुभः ॥ ७२ ॥ एकदेति युग्मम् ॥ एकदा तु सभामध्ये राजासनमास्थितो मुन्यादिभिर्वृतश्च युधिष्ठिर एतेषां मुन्यादीनां शृण्वतामेव सतां कृष्णेन तुल्यः कोऽपि कर्तुं न शक्त इति ताननादृत्य आभाष्य हे प्रभो इत्यादि सप्रेम सम्बोध्य इदं वक्ष्यमाणमुवाच ॥ १ ॥ २ ॥ क्रत्विति ॥ हे गोविन्द क्रतुराजेन राजसूयेन पावनीः पापापहा भवतः विभूतीः अंशान् देवान् अहं यक्ष्ये आराधयिष्यामि । नोऽस्माकं तदभिप्रेतं यजनं संपादय निर्वर्तय इति ॥ ३ ॥ त्वदिति ॥ हे कमलनाभ हे ईश ये जनाः अभद्रस्य नशनं याभ्यां ते पापना-शिके त्वत्पादुके उपानहौ किं पुनः साक्षात्पादौ अविरतं निरन्तरं परिचरन्ति देहेन सेवन्ते परीत्यस्य व्यवहिताश्चेति यच्छब्दव्यवधानं छान्दसम् । मनसा ध्यायन्ति वचसा

गृणन्ति त एव शुचयः परिशुद्धान्तःकरणाः सन्तो भवस्यापवर्गं समाप्तिलक्षणं मोक्षं विन्दन्ति ते यदि आशिषः विषयान् आशासते वाञ्छन्ति तदा ता अपि विन्दन्ति नान्ये। चक्रवर्तिनोऽपि अतः त्वत्पादुकासेविनो मम राजसूयो न दुष्करः ॥ ४ ॥ तदिति ॥ हे देवदेव हे विभो इह संसारे एष लोकः प्राणिसमूहः भवतश्चरणारविन्दसेवायाः अनुभावं फलं पश्यतु तथा कुरुसृञ्जयानां मध्ये ये त्वां भजन्ति उत अथवा ये च कर्मप्रधानाः अथवा दुर्योधनाद्याः त्वां न भजन्ति तेषामुभयेषां निष्ठां स्थितिं फलम् अभ्युदयतदभावौ प्रदर्शय ॥ ५ ॥ नेति ॥ यद्यपि ब्रह्मणः निरुपाधेः सर्वस्यात्मनः समदृशः स्वसुखानुभूतेः रागाद्यभावेन आत्मानन्दानुभवरूपस्य तव स्वः पर इति भेदमतिर्न स्यात् नास्ति तथापि संसेवतां त्वां सम्यक् सेवमानानामेव शता आर्षः। त्वत्प्रसादो भवति नान्येषाम् अत्र एवं सत्यपि तव विपर्ययो वैषम्यनैर्घृण्यादिदोषो नास्ति यतः सेवानुरूपमेवोदयः फलं भवति। यथा सुरतरोः कल्पद्रुमस्य गुणदोषादिकमविचारयनः अयं भजत्वयं मा भजत्विति वैषम्यरहितस्य तस्य समत्वेऽपि सेवकेष्वेव फलज-

**तद्देवदेव भवतश्चरणारविन्दसेवाऽनुभावमिह पश्यतु लोक एषः॥ये त्वां भजन्ति न भजन्त्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम्॥५॥**
**न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः ॥ संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥६॥**
**श्रीभगवानुवाच ॥ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शिना ॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति ॥ ७ ॥ ऋषीणां पितृदेवानां सुहृदामपि नः प्रभो ॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम् ॥ ८ ॥ विजित्य नृपतीन्सर्वान्कृत्वा च जगतीं वशे ॥ संभृत्य सर्वसंभारानाहरस्व महाक्रतुम् ॥ ९ ॥ एते ते भ्रातरो राजँल्लोकपालांशसंभवाः ॥ जितोऽस्म्यात्मवता तेऽहं दुर्जयो योऽकृतात्मभिः ॥ १० ॥**

नकत्वं नान्येषां तथापि न वैषम्यं गण्यते तथैव तवापीत्यर्थः। यद्वा। कल्पद्रुमसाम्येऽपि तत्र सेवानुरूपमेवोदयस्त्वत्प्रसादे तु तथा न किन्त्वधिकमपि सेवावैगुण्येऽपि विपर्ययो नास्ति धावन्निमील्य वा नेत्रे इत्याद्युक्तेः ॥ ६ ॥ सम्यगिति ॥ हे राजन् हे शत्रुकर्शन इति संबोधयन् सर्वराजविजयशक्तिं संचारयति भवता सम्यक् व्यवसितं निश्चितं वक्तुमिष्टं वा येन व्यवसितयज्ञानुष्ठानेन कल्याणी पुण्यावहा तव कीर्तिर्लोकाननुभविष्यति सर्वलोकेषु व्याप्ता भविष्यति ॥ ७ ॥ ऋषीणामिति ॥ हे प्रभो ऋष्यादीनां सर्वेषां भूतानां तथा नोऽस्माकं सुहृदामप्ययं क्रतुराट् ईप्सितः इष्टः ॥ ८ ॥ विजित्येति ॥ सर्वान्नृपतीन् विजित्य जगतीं पृथ्वीं सर्वां वशे कृत्वा सर्वसंभारान् यज्ञसाधनानि संभृत्य सम्पाद्य महाक्रतुं राजसूयमाहरस्व अनुतिष्ठ ॥ ९ ॥ एते इति ॥ तव भ्रातरो भीमादयो लोकपालानां वाय्विन्द्रादीनामंशसंभवाः किंच यः अकृतात्मभिरजितेन्द्रियैर्दुःखेनापि जेतुं वशीकर्तुमशक्यः सोहमात्मवता जितेन्द्रियेण ते त्वया जितोऽस्मि वशीकृतोऽस्मि अतोऽपि तव किं दुःसाध्यमित्याशयः ॥ १० ॥

नेति ॥ अहमेव परः उपास्यो यस्य तं मत्परं लोके कश्चित् देवोऽपि तेजसा प्रभावेण यशसा श्रिया शोभया विभूतिभिः सैन्यादिसाधनैः नाभिभवेत् अभिभवितुं न शक्नुयात् पार्थिवो मनुष्यस्तत्र न शक्नुयादिति तु किं वक्तव्यम् ॥११॥ निशम्येति ॥ भगवता गीतमुक्तं निशम्य प्रीतः अत एव फुल्लं विकसितं मुखाम्बुजं यस्य स युधिष्ठिरः दिग्विजये निमित्ते विष्णोः कृष्णस्य तेजसा उपबृंहितान् संवर्धितान् सन्धिरार्षः । तेजःशब्दोऽपि क्वाप्यदन्त इति केप्याहुः । भ्रातॄन् अयुङ्क्त नियुक्तवान्॥१२॥सहदेवमिति सार्द्धम् ॥ सृञ्जयैः सह सहदेवं दक्षिणस्यामादिशत् प्रैषयत् मत्स्यैः सह नकुलं प्रतीच्यां दिशि कैकेयैः सह सव्यसाचिनमर्जुनमुदीच्यां दिशि मद्रकैः सह वृकोदरं भीमं प्राच्यामादिशत् ॥ १३ ॥ ते इति ॥ हे नृप ते भीमादयो वीरा ओजसा स्वपौरुषेण नृपान् विजित्य यक्ष्यते यागं करिष्यमाणाय अजातशत्रवे युधिष्ठिराय राजसूयाङ्गभूतकरग्रहणार्थमेव विजयेन तस्य कुत्रापि दोषाभावात् दिग्भ्यः भूरि बहु द्रविणं धनमाजह्रुः आहृत्य समर्पयामासुः ॥ १४ ॥ श्रुत्वेति ॥ जरासन्धमजितं श्रुत्वा कथं स जेतव्य इति ध्यायतो

न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ॥ विभूतिभिर्वाऽभिभवेद्देवोऽपि किमु पार्थिवः ॥ ११ ॥ श्रीशुक उवाच ॥ निशम्य भगवद्गीतं प्रीतः फुल्लमुखाम्बुजः ॥ भ्रातॄन्दिग्विजयेऽयुङ्क्त विष्णुतेजोपबृंहितान् ॥ १२ ॥ सहदेवं दक्षिणस्यामादिशत्सह सृञ्जयैः ॥ दिशि प्रतीच्यां नकुलमुदीच्यां सव्यसाचिनम्॥प्राच्यां वृकोदरं मत्स्यैः कैकेयैः सह मद्रकैः ॥१३॥ ते विजित्य नृपान्वीरा आजह्रुर्दिग्भ्य ओजसा॥अजातशत्रवे भूरि द्रविणं नृप यक्ष्यते ॥ १४ ॥ श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः ॥ आहोपायं तमेवाद्य उद्धवोयमुवाच ह ॥ १५ ॥ भीमसेनोऽर्जुनः कृष्णो ब्रह्मलिङ्गधरास्त्रयः ॥ जग्मुर्गिरिव्रजं तात बृहद्रथसुतो यतः ॥ १६ ॥ ते गत्वातिथ्यवेलायां गृहेषु गृहमेधिनम् ॥ ब्रह्मण्यं समयाचेरन्राजन्या ब्रह्मलिङ्गिनः ॥ १७ ॥ राजन्विद्ध्यतिथीन्प्राप्तानर्थिनो दूरमागतान् ॥ तन्नः प्रयच्छ भद्रं ते यद्वयं कामयामहे ॥ १८ ॥ किं दुर्मर्षं तितिक्षूणां किमकार्यमसाधुभिः ॥ किं न देयं वदान्यानां कः परः समदर्शिनाम् ॥ १९ ॥

नृपतेर्युधिष्ठिरस्य यमुपायं बलिनामपि चान्येषामित्यादिना उद्धव उवाच तमेवोपायम् आद्यो हरिराह स्म ॥ १५ ॥ भीमेति ॥ हे तात भीमादयस्त्रयो ब्रह्मलिङ्गधरा ब्राह्मणरूपधारिणः सन्तो यतो यत्र बृहद्रथसुतो जरासन्धोऽभूत्तद्गिरिव्रजसंज्ञकं स्थानं जग्मुः ॥ १६ ॥ ते इति ॥ ते ब्रह्मलिङ्गिनः ब्राह्मणवेषधारिणो राजन्यः क्षत्रिया भीमादयः आतिथ्यवेलायां दानसमये तद्गृहेषु गत्वा गृहमेधिनं गृहे वर्त्तमानं ब्रह्मण्यं ब्राह्मणभक्तं जरासन्धं समयाचेरन् समयाचन्त इत्यर्थः । झस्य रन् एत्वं चार्षं ॥ १७ ॥ राजन्निति ॥ हे राजन् दूरमागतानर्थिनोऽस्मान् प्राप्तान् अतिथीन् विद्धि अतो यद्वयं कामयामहे तन्नोऽस्मभ्यं प्रयच्छ देहि ते भद्रं भूयात् जरासन्धस्य मोक्षप्राप्तेः ॥ १८ ॥ ननु विशेषकथनं विना कथमङ्गीकुर्यामन्यथा पुत्रादिकमदेयमपि भवद्भिर्याच्येत तत्राहुः—किमिति ॥ यथा असाधुभिः अकार्यम् अकर्त्तव्यं किं किमपि नास्ति यथा च तितिक्षूणां

सहनशीलानां दुर्मर्षं दुःसहं किमस्तीति यथा च समदर्शिनां परः शत्रुः परकीयो वा कोऽस्ति तथा वदान्यानाम् अत्युदाराणामदेयं किंचिन्नास्तीत्यर्थः ॥ १९ ॥ य इति ॥ यः प्राणी स्वयं कल्पः समर्थः सन्नपि सतां सद्भिर्गेयं ध्रुवं नित्यं यशो नित्येन शरीरेण नाचिनोति न सम्पादयति स वाच्यः निन्द्य एव साधुभिः शोच्यश्चेत्यर्थः ॥ २० ॥ हरिश्चन्द्र इति ॥ हरिश्चन्द्रो विश्वामित्रार्थानृणभावाय भार्यात्मजादिविक्रीयाप्यनिर्विण्णः स्वर्गं गतः बलिरन्तिदेवयोः कथा भागवत एव स्फुटा । उञ्छवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुम्बोऽप्यतिथ्यादानेन ब्रह्मलोकं गतः शिबिः शरणागतकपोतरक्षणाय स्वमांसं श्येनाय दत्त्वा दिवं गतः कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्त्वा विमानेन दिवं गतः व्याधश्च तयोः सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निना दग्धदेहो निष्कल्मषो दिवमारुरोह । एवमन्ये च बहवः अध्रुवेण शरीरेण ध्रुवं लोकं गताः ॥ २१ ॥ स्वरैरिति ॥ एवमुक्तो जरासुतः स्वरैः दैन्यरहितैः आलापैः याच्ञा पुष्ट्यर्थमङ्गाङ्गिभावेन त्रयाणामुक्तिर्ज्ञेया आकृतिभिः शरीरावयवसंस्थानविशेषैः ज्याहतैः ज्याघातकिणाङ्कितैः

योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम् ॥ नाऽऽचिनोति स्वयं कल्पः स वाच्यः शोच्य एव सः ॥ २० ॥ हरिश्चन्द्रो रन्तिदेव उञ्छवृत्तिः शिबिर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥ २१ ॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबन्धून्विज्ञाय दृष्टपूर्वानचिन्तयत् ॥ २२ ॥ राजन्यबन्धवो ह्येते ब्रह्मलिङ्गानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥ २३ ॥ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद् भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥ २४ ॥ श्रियं जिहीर्षतेन्द्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोऽपि दैत्यराट् ॥ २५ ॥ जीवता ब्राह्मणार्थाय कोन्वर्थः क्षत्रबन्धुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥ २६ ॥

प्रकोष्ठैश्च लिङ्गैस्तान्दृष्टपूर्वान् द्रौपदीस्वयंवरादिषु पूर्वं दृष्टान् राजन्यबन्धून् याचकत्वान्निकृष्टक्षत्रियान् विज्ञाय अनुमायाचिन्तयत् विचारितवान् ॥ २२ ॥ राजन्येति ॥ एते राजन्यबन्धवः भयाद्ब्रह्मलिङ्गानि बिभ्रति अतस्तेभ्यो भिक्षितं दुस्त्यजमात्मानं देहमपि ददामि ॥ २३ ॥ बलेरिति द्वयम् ॥ इन्द्रस्यार्थं श्रियं हर्तुमिच्छता विप्रव्याजेन विष्णुना इन्द्रस्य स्वर्गस्वामिन इति बलिविशेषणं वा । ऐश्वर्याद् भ्रंशितस्य चालितस्यापि बलेः अकल्मषापवित्रा वितता दिक्षु व्याप्ता कीर्तिः श्रूयते यतः शुक्रेण वार्यमाणोऽपि अयं विष्णुर्मदीयं सर्वस्वं हरिष्यतीति जानन्नपि दैत्यराट् बलिर्द्विजरूपिणे विष्णवे महीं प्रादात् ॥ २४ ॥ २५ ॥ जीवतेति ॥ पतमानेन प्रतिक्षणं क्षीयमाणेन शानजार्षः । चानश् वा । ब्राह्मणार्थाय विपुलं यशो नेहता असम्पादयता शता आर्षः । क्षत्रबन्धुना देहेन जीवता को न्वर्थः किं प्रयोजनं सिध्यति न किमपीत्यर्थः ॥ २६ ॥

इतीति ॥ इत्येवमुदारा दातुमुत्सुका मतिर्यस्य स जरासन्धः कृष्णादीन् प्राह स्म । तदुक्तिमेवाह हे विप्राः कामः स्वाभिलषितः पदार्थो व्रियताम् आत्मनो मम शिरोऽप्यभिलषितं चेत्तर्हि वो युष्मभ्यं ददामि ॥ २७ ॥ युद्धमिति ॥ हे राजेन्द्र यदि मन्यसे यथेष्टं दातुमिच्छसि तर्हि नोऽस्मभ्यं द्वन्द्वशो युद्धं देहि यतो वयं युद्धार्थिनो राजन्याः क्षत्रिया इह प्राप्ताः नत्वन्नकाङ्क्षिणो ब्राह्मणाः ॥२८ ॥ असाविति ॥ स्पष्टम् ते रिपुमिति मयैवैतावानीताविति भावः ॥ २९ ॥ एवमिति ॥ एवमावेदितो भगवता विज्ञापितः स मागधो राजा उच्चैर्जहास। अमर्षितः क्रुद्धः सन्नाह स्म च हे मन्दाः वस्तुतः अमन्दा इति च्छेदः। यदि युद्धमेव काङ्क्षितं तर्हि वो युष्मभ्यं युद्धमेव ददामि॥३०॥नेति॥ भीरुणा अतो युधि विक्लवचेतसा त्वया न योत्स्ये यः त्वं मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणगतोऽभूः वस्तुतः अभीरुणा बहुशो मां जितवता निर्भयेन त्वया सह युधि विक्लवचेतसा युक्तोऽहं न योत्स्ये यतः मथुरामुपलक्षणतया द्वारकां च स्वपुरीं त्यक्त्वा सैन्यरहित एव त्वं मां हन्तुं समुद्रं प्राकारादिकृतमुद्रणयुक्तं शरणं मदीयं गृहं गतः प्राप्तोऽसि

इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥ २७ ॥ श्रीभगवानुवाच ॥ युद्धं नो देहि
राजेन्द्र द्वन्द्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्नकाङ्क्षिणः ॥ २८ ॥ असौ वृकोदरः पार्थस्तस्य भ्रातार्जुनो ह्ययम् ॥
अनयोर्मातुलेयं मा कृष्णं जानीहि ते रिपुम् ॥२९॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मन्दा युद्धं तर्हि ददामि
वः ॥ ३० ॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥ ३१ ॥ अयं तु वयसाऽतुल्यो
नातिसत्त्वो न मे समः ॥ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥ ३२ ॥ इत्युक्त्वा भीमसेनाय प्रदाय महतीं गदाम् ॥ द्वितीयां
स्वयमादाय निर्जगाम पुराद्बहिः ॥ ३३ ॥ ततः समेखले वीरौ संयुक्ताावितरेतरम् ॥ जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ॥ ३४ ॥
मण्डलानि विचित्राणि सव्यं दक्षिणमेव च ॥ चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ॥ ३५ ॥

॥ ३१ ॥ अयमिति ॥ अयमर्जुनस्तु वयसा अतुल्यः न्यूनः नापि अतिसत्वः बलाधिकः अतोऽर्जुनो योद्धा न भवेत् । भीमस्तु मम तुल्यबलः अतो योद्धा भवेत् ॥ ३२ ॥ इतीति ॥ इत्युक्त्वा जरासन्धः स्वकीयामेव महतीं गुर्वीं गदां भीमसेनाय प्रदाय दत्त्वा तथाभूतां द्वितीयां गदां स्वयमादाय युद्धार्थं पुराद्बहिर्निर्जगाम ॥ ३३ ॥ तत इति ॥ ततश्च समे निम्नोन्नतत्वरहिते खले कोमलप्रदेशे यद्वा मेखलाभित्तिविशेषस्तत्सहिते भूमिनिखननादिना युद्धार्थं सम्पादिते युद्धाङ्गणे रणदुर्मदौ वीरौ इतरेतरं परस्परं संयुक्तौ मिलितौ वज्रकल्पाभ्यां गदाभ्यां जघ्नतुः ॥ ३४ ॥ मण्डलानीति ॥ सव्यं दक्षिणं च यथा भवति तथा विचित्राणि मण्डलानि गदायुद्धगतिभेदान् चरतोस्तयोः रङ्गिणो रङ्गभूमिगतयोर्नटयोरिवेति निर्भयत्वेनोपमा युद्धं शुशुभे ॥ ३५ ॥

तत इति ॥ ततश्च हे राजन् क्षिप्तयोः क्षेपणकर्मीभूतयोर्गदयोः दन्तिनोर्गजयोर्दन्तयोरिव परस्पराघ्याघातजन्यो वज्रस्य निष्पेषः सम्पातस्तच्छब्दसदृशोऽतिभयङ्करश्चटचटेतिशब्दो बभूवेति शेषः ॥ ३६ ॥ ते इति ॥ अन्योऽन्यतः परस्परं भुज बलेन भुजजवेनेत्यपि पाठः । निपात्यमाने ते गदे अंसादीनुपेत्य प्राप्य चूर्णीबभूवतुः । अंसः स्कन्धः जत्रु तत्संलग्नास्थिविशेषः जत्रूनित्येकत्वाभाव आर्षः । यथा दीप्तो मन्युः क्रोधो ययोस्तयोरर्कवृक्षशाखाभ्यां संयुध्यतोः शता आर्षः । द्विरदयोर्गजयोरङ्गानि प्राप्य यथार्कशाखे चूर्णीभवतस्तथा ॥ ३७ ॥ इत्थमिति ॥ इत्थं तयोर्गदयोः प्रहतयोर्भग्नयोः सत्योः क्रुद्धौ नृवीरौ भीमजरासन्धौ अयोवल्लोहवत्स्पर्शो येषां तैः स्वमुष्टिभिरन्योन्यं शरीरमपिष्टां ताडयामासतुः । एवमिभयोरिव परस्परं प्रहरतोस्तयोस्तलेन ताडनं चपेटस्तत उत्थः शब्दश्च निर्घातो निरभ्रगर्जितं वज्रः वज्रपातस्तच्छब्दवत् परुषः भयङ्करः आसीदित्यन्वयः ॥ ३८ ॥ तयोरिति ॥ हे नृप शिक्षा अभ्यासः बलं शारीरम् ओज इन्द्रियसामर्थ्यं समान्येतानि ययोस्तयोरक्षीणबलयोरेवं

ततश्चटचटाशब्दो वज्रनिष्पेषसन्निभः ॥ गदयोः क्षिप्तयो राजन्दन्तयोरिव दन्तिनोः ॥३६॥ ते वै गदे भुजजवेन निपात्यमाने अन्योऽन्यतोंऽसकटिपादकरोरुजत्रून् ॥ चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः ॥३७॥ इत्थं तयोः प्रहतयोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयःस्पर्शैरपिष्टाम् ॥ शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः॥३८॥तयोरेवं प्रहरतोः समशिक्षाबलौजसोः॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥३९॥ एवं तयोर्महाराज युध्यतोः सप्तविंशतिः ॥ दिनानि निरगंस्तत्र सुहृद्वन्निशि तिष्ठतोः ॥ ४० ॥ एकदा मातुलेयं वै प्राह राजन्वृकोदरः ॥ न शक्तोऽहं जरासन्धं निर्जेतुं युधि माधव ॥ ४१ ॥ शत्रोर्जन्ममृती विद्वाञ्जीवितं च जराकृतम् ॥ पार्थमाप्याययन्स्वेन तेजसाऽचिन्तयद्धरिः ॥ ४२ ॥ सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः ॥ दर्शयामास विटपं पाटयन्निव संज्ञया ॥ ४३ ॥

प्रहरतोर्निर्विशेषं समानं युद्धमभूत् ॥ ३९ ॥ एवमिति ॥ श्लोकद्वयं प्रक्षिप्तमिति काशीनाथः । हे महाराज एवं युद्ध्यतोः शता आर्षः । निशि सुहृद्वत् मित्रवत् तत्र जरासन्धगृहे तिष्ठतोस्तयोः सप्तविंशतिर्दिनानि निरगन् व्यतीतानि निरगन्नित्यार्षम् ॥ ४० ॥ एकदेति ॥ हे राजन् एकदा वृकोदरो भीमो मातुलेयं मातुलपुत्रं कृष्णं प्राह स्म । तदाह हे माधव युधि जरासन्धं निर्जेतुमहं न शक्तः ॥ ४१ ॥ शत्रोरिति ॥ शत्रोर्जरासन्धस्य जन्म शकलद्वयरूपेण मृतिश्च पुनः शकलीभावेन ते जरानाम राक्षसी तया शकलसन्धानेन कृतं तज्जीवितं च विद्वान् जानन् हरिः स्वेन तेजसा पार्थं भीममाप्याययन् उपबृंहयन् सन् कथमस्य शकलीभावं भीमो जानीयादित्यचिन्तयत् ॥ ४२ ॥ सञ्चिन्त्येति ॥ अमोघदर्शनः भगवान् संचिन्त्य तदुपायं ज्ञात्वा विटपं शाखां पाटयन्निव यथाहं विटपशाखां पाटयामि तथा त्वमेनं पाटयेति संज्ञया संकेतेनेति अ॰ः शत्रोर्जरासन्धस्य वधोपायं भीमस्य दर्शयामास ॥ ४३ ॥

तदिति ॥ महासत्त्वः प्रहरतां वरश्च भीमः तत् भगवता सूचितमुपायं विज्ञाय पादयोः शत्रुं गृहीत्वा भूतले पातयामास ॥ ४४ ॥ एकमिति ॥ पदा स्वपादेनैकं शत्रोः पाद-
माक्रम्य दृढमवष्टभ्यान्यं पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य स भीमः महागजो यथानायामेन शाखां पाटयति तथा तं गुदतः आरभ्य पाटयामास विदारितवान् ॥४५॥ एकेति ॥
एकैकः पादादिस्तथा एकैको बाह्वादिर्ययोस्ते शकले तत्रस्थाः प्रजा ददृशुः ॥ ४६ ॥ हाहेति ॥ एवं मगधेश्वरे निहते सति तत्प्रजाकृतः महान् हाहाकारशब्द आसीत् ।
जयोऽर्जुनः अच्युतः कृष्णः तौ भीमं परिरभ्य पूजयामासतुः स्तुत्यादिना सत्कृतवन्तौ ॥ ४७ ॥ दुर्वृत्तत्वादसौ हतो नतु राज्यलोभेनेति दर्शयन्नाह—सहदेवमिति ॥
भूतभावनः अप्रमेयात्मा प्रभुर्भगवान् तस्य जरासन्धस्य तनयं सहदेवं मगधानां देशानां पतिं पतित्वेन अभ्यषिञ्चत् ॥ ४८ ॥ मोचयामासेत्यर्द्धम् ॥ ये च मागधेन संरुद्धाः
आसन् तान् राजन्यान् मोचयामास ॥ ४९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे द्विसप्ततितमे व्यधात् ॥ ७२ ॥ त्रिसप्ततितमे रुद्धान्मोच-

तद्विज्ञाय महासत्त्वो भीमः प्रहरतां वरः ॥ गृहीत्वा पादयोः शत्रुं पातयामास भूतले ॥४४॥ एकं पादं पदाक्रम्य दोर्भ्यामन्यं प्रगृह्य सः ॥ गुदतः
पाटयामास शाखामिव महागजः ॥ ४५ ॥ एकपादोरुवृषणकटिपृष्ठस्तनांसके ॥ एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः ॥ ४६ ॥ हाहाकारो
महानासीन्निहते मगधेश्वरे ॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥४७॥ सहदेवं तत्तनयं भगवान् भूतभावनः ॥ अभ्यषिञ्चदमेयात्मा मग-
धानां पतिं प्रभुः ॥४८॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये ॥४९॥ इति श्रीभा० म० दश० उ० जरासन्धवधो नाम द्विसप्ततितमोऽध्यायः
॥७२॥ श्रीशुक उवाच ॥ अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः ॥ ते निर्गता गिरिद्रोण्या मलिना मलवाससः ॥ क्षुत्क्षामाः शुष्कवदनाः
संरोधपरिकर्शिताः ॥१॥ ददृशुस्ते घनश्यामं पीतकौशेयवाससम् ॥ श्रीवत्साङ्कं चतुर्बाहुं पद्मगर्भारुणेक्षणम् ॥२॥ चारुप्रसन्नवदनं स्फुरन्मकर-
कुण्डलम् ॥ पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ॥ ३ ॥ किरीटहारकटककटिसूत्राङ्गदाञ्चितम् ॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया ॥४॥

यित्वा नृपान्हरिः ॥ देशान्प्रस्थाप्यागमच्च तत्र श्लोकाः शराग्नयः[35] ॥ उवाचपञ्चकं सार्द्धाः स्युः षट्त्रिंशदनुष्टुभः[36] ॥ ७३ ॥ अयुते इति सार्द्धम् ॥ द्वे अयुते अष्टौ शतानि च ये
राजन्या युद्धे जरासन्धेन लीलया निर्जिताः गिरिद्रोण्यां सन्निरुद्धाश्च ते स्वरूपतो मलिनाः अभ्यङ्गोद्वर्तनस्नानाद्यभावात् तथा मलानि मलयुक्तानि वासांसि येषां ते क्षुधा क्षामा
दुर्बलाः शुष्काणि वदनानि येषां ते संरोधेन परिकर्शिता क्लेशिताः गिरिद्रोण्याः निर्गताः ॥ १ ॥ ददृशुरिति त्रिकम् ॥ ते राजानः घनमिव श्यामं पीते कौशेये वाससी यस्य
तम् । श्रीवत्सो रोमरेखाविशेषोऽङ्को वक्षसि चिह्नं यस्य तं चतुर्बाहुं पद्मगर्भतुल्ये अरुणे ईक्षणे नेत्रे यस्य तं चारु सुन्दरं प्रसन्नं च वदनं यस्य तं स्फुरती मकराकारे कुण्डले
यस्य तं पद्महस्तं गदादिभिरुपलक्षितं शोभितं केरीटादिभिरञ्चितम् अलंकृतं भ्राजत् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्य तं वनमालया आपादकण्ठविल-

म्बितया निवीतं व्याप्तं कृष्णं ददृशुः ॥ २ ॥ ३ ॥ ४ ॥ पिबन्त इति सार्द्धम् ॥ चक्षुर्भ्यां पिबन्त इव जिह्वया लिहन्त इव नासाभ्यां जिघ्रन्त इव बाहुभिः रम्भन्तः आलिङ्गन्त इव शता नुम् च आर्षौ । भगवद्दर्शनेन हतपाप्मानः ते नृपाः मूर्द्धभिः हरेः पादयोः प्रणेमुः ॥ ५ ॥ कृष्णेति ॥ कृष्णस्य सन्दर्शनादेव यः आह्लादः तेन ध्वस्तो निरस्तः संरोधजनितः क्लमः खेदो येषां ते नृपा बद्धाञ्जलयः सन्तो हृषीकेशं गीर्भिः प्रशशंसुः ॥ ६ ॥ नम इति ॥ हे देवदेवेशेत्याद्याः सम्बुद्धयः ते तुभ्यं नमः । प्रपन्नान् निर्विण्णान् दुःखानुभवेन सर्वतो विरक्तान् संनिरोधाद्विमोचितानस्मान् घोरायाः संसृतेरपि पाहि मोचय ॥ ७ ॥ नेति ॥ हे नाथ हे मधुसूदन हे विभो वयं त्वेनं मागधम् अनुलक्षीकृत्य नासूयामः अस्मिन् राज्यापहारकत्त्वादिदोषान्नारोपयामः । एनादेश आर्षः । यद्यस्मात् जरासन्धात् राज्ञामस्माकं राज्याच्च्युतिः भ्रंशो जातस्ततश्च भवतोऽनुग्रहो जातः ॥ ८ ॥ राज्येति ॥ राज्ये यदैश्वर्यं तेन यः ईश्वरोऽहं यथेष्टं व्यवहरिष्यामीत्याकारको मदस्तेनोन्नद्धः उच्छृङ्खलः नृपः श्रेयो न विन्दते किंतु त्वन्मायामोहितः

पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया ॥ जिघ्रन्त इव नासाभ्यां रम्भन्त इव बाहुभिः ॥ प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥ ५ ॥ कृष्णसंदर्शनाह्लादध्वस्तसंरोधनक्लमाः ॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्राञ्जलयो नृपाः ॥६॥ राजान ऊचुः ॥ नमस्ते देवदेवेश प्रपन्नार्तिहराव्यय ॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः ॥ ७ ॥ नैनं नाथान्वसूयामो मागधं मधुसूदन ॥ अनुग्रहो यद्भवतो राज्ञां राज्यच्युतिर्विभो ॥ ८ ॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विन्दते नृपः ॥ त्वन्मायामोहितोऽनित्या मन्यते सम्पदोऽचलाः ॥ ९ ॥ मृगतृष्णां यथा बाला मन्यन्त उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥ १० ॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ॥ घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाऽविगणय्य दुर्मदाः ॥ ११ ॥ त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण विचालिताः श्रियः ॥ कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ स्मराम ते ॥ १२ ॥

सन्नित्या चञ्चलाः अपि सम्पदोऽचलाः शाश्वतीर्मन्यते ॥ ९ ॥ मृगतृष्णामिति ॥ बालाः अज्ञाः यथा मृगतृष्णां मरीचिकाम् उदकाशयं नदीतटाकादिकं मन्यन्ते एवमयुक्तास्त्वत्संबन्धरहिता अविवेकिनो वैकारिकीं विकाराः शब्दादिविषयास्तेभ्य उद्भूतां भोगसम्पदं मायां मायिकीमपि वस्तु चक्षते परमपुरुषार्थतया पश्यन्ति ॥ १० ॥ वयमिति युग्मम् ॥ हे प्रभो हे कृष्ण अस्या भूमेर्जिगीषया इतरेतरस्पृधः परस्परं स्पर्धमानाः स्पर्द्धतेः स्पृधभाव आर्षः । श्रीमदेन नष्टा दृष्टिर्येषां ते मृत्युरूपं त्वा त्वामविगणय्य दुर्मदा ये वयं पुरा राज्यस्थित्यवस्थायां स्वाः स्वकीयाः प्रजा घ्नन्तः युद्धार्थं प्रयुज्य धनाद्यर्थं वा प्रपीड्य नाशयन्तः अतिनिर्घृणाः निर्दयाः अभवाम । त एवाद्य गभीरम् अलक्षितं रंहो वेगो यस्य तेन तथा दुरन्तं वीर्यं पराक्रमो यस्य तेन भवतस्तन्वा मूर्तिविशेषेण कालेन श्रियः सकाशाच्चालिता भ्रंशिताः अतो नष्टदर्पाः गतगर्वाः भवतोऽ-

नुकम्पया ते तव चरणौ स्मराम स्मर्तुमाशास्महे प्रार्थने लोट् । अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥ ११ ॥१२॥ अथो इति ॥ अथो तस्मात् मृगतृष्णिर्मृगतृष्णा तया रूपितं तत्सदृशं मृगतृष्णिरूपितमिति बोपदेवसम्मतः पाठः । अर्थः स एव । यद्वा । मृगतृष्णिभिः मृगतृष्णावद्भिरेव रूपितं सुन्दरीकृतं शश्वत्पतता क्षीयमाणेन तत्र हेतुः रुजां रोगाणां भुवा उत्पत्तिस्थानभूतेन देहेन उपासितव्यं संसेवितव्यं राज्यं न स्पृहयामहे । तथा कर्णयो रोचनं रुचिजनकमात्रं प्रेत्य परलोके स्वर्गादिकं प्राप्य उपासितव्यम् । भोग्यं यत्क्रियाफलं स्वर्गादिसुखं तदपि क्षयातिशयादियुक्तत्वान्न स्पृहयामहे ईप्साप्रकर्षाभावेऽपि तद्विवक्षया द्वितीया ॥१३॥ तमिति॥ येनोपायेन यथानुष्ठितेनेह संसारे संसरतां भ्रमतामपि नोऽस्माकं ते तव चरणाब्जयोः स्मृतिर्न विरमेत् विच्छिन्ना न भवेत्तमुपायं समादिश आज्ञापय ॥ १४ ॥ कृष्णायेति ॥ प्रणतानां क्लेशं नाशयति तस्मै स्पष्टं शेषम् ॥ १५ ॥ संस्तूयमान इति ॥ हे तात मुक्तं मागधकृतं बन्धनं येषां तै राजभिरेवं संस्तूयमानः शरण्यः करुणश्च भगवान् श्लक्ष्णया मञ्जुलया गिरा तानाह स्म ॥ १६ ॥

अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥ १३ ॥ तं नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संसारतामिह ॥ १४॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ १५ ॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबन्धनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥१६॥ श्रीभगवानुवाच ॥ अद्य प्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥ १७॥ दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥ १८॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥ श्रीमदाद् भ्रंशिताः स्थानाद्देवदैत्यनरेश्वराः ॥ १९ ॥ भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ॥ मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षत ॥ २० ॥

अद्येति ॥ हे भूपाः युष्माभिर्यथा आशंसितं प्रार्थितं तथा बाढं निश्चितं वो युष्माकमद्य प्रभृति आत्मनि अखिलेश्वरे मयि सुदृढा भक्तिर्जायते जायताम् । निरन्तरं मत्स्मरणं भवत्वित्यर्थः ॥ १७ ॥ दिष्ट्येति ॥ हे भूपाः भवन्तः ऋतभाषिणः सत्यवचनाः सन्ति अतः भवद्भिः मत्स्मरणादिकं दिष्ट्या व्यवसितं निश्चितं यतः श्रिया धनेन हेतुना ऐश्वर्यमदोन्नाहम् ईश्वरत्वाभिमानाधिक्यं नृणामुन्मादकं श्रेयः प्रतिबन्धकमहं पश्ये पश्यामीति तङार्षः ॥ १८ ॥ हैहय इति ॥ हैहयाद्याः अपरे च देवदैत्यनरेश्वराः श्रीमदाद्धेतोः स्थानाद्राज्याद् भ्रंशिताः एतेषां कथा भागवत एव द्रष्टव्या॥१९॥भवन्त इति ॥ अतो हे भवन्त इति सम्बुद्धिः । एतत् यदुत्पाद्यं देहादितदन्तवद्विज्ञाय युक्ताः सावधानचिताः अध्वरैर्यज्ञैर्मां यजन्तः पूजयन्तो धर्मेण प्रजा रक्षथ रक्षिष्यथ । सामीप्ये लट् रक्षतेत्यर्थः । यूयमिति शेषः ॥ २० ॥

स्नन्तन्वन्त इति ॥ प्रजातन्तून् पुत्रपौत्रादिसन्ततीः संतन्वन्तः विस्तारयन्तः सुखं दुःखं भवाभवौ विभवतद्विनाशौ एतेषु च प्राप्तं प्राप्तं सेवन्तः समत्वेन सेवमानाः शता आर्षः । मयि विषयभूते चित्तं येषां ते मच्चिताः मां स्मरन्तो विचरिष्यथ कालं नेष्यथ ॥ २१ ॥ उदासीना इति ॥ देहधनपुत्रादौ उदासीनाः आत्मन्येवारामो रमणं येषां ते तथा धृतव्रताः गृहीतसन्नियमाः सम्यक् निर्वासनं मनो मय्यावेश्य अन्ते प्रारब्धावसाने परब्रह्मात्मकं मां यास्यथ प्राप्स्यथ ॥ २२ ॥ इतीति ॥ भुवनेश्वरो भगवान् कृष्णः इत्येवं नृपानादिश्य अनुशिष्य तेषां मज्जनकर्मणि अभ्यङ्गस्नानादौ निमित्ते पुरुषान् स्त्रियः स्त्रीश्च न्ययुङ्क्त ॥ २३ ॥ सपर्यामिति ॥ हे भारत सहदेवेन जरासन्धपुत्रेण प्रयोज्यकर्त्रा नरदेवानां राज्ञामुचितैर्योग्यैर्वस्त्रादिभिः साधनैस्तेषां सपर्याम् अलङ्कारं च कारयामास ॥ २४ ॥ भोजयित्वेति ॥ एवं सुस्नातान् समलङ्कृतांश्च तान् वरेण श्रेष्ठेनान्नेन भोजयित्वा ताम्बूलाद्यैरन्यैश्च नृपोचितैर्विविधैर्भोगैर्युक्तान् कारयामास । यद्वा । पूर्वश्लोकेन सह युग्मम् सुस्नातान् समलंकृतान् भोगैश्च युक्तान् वरेणान्नेन भोजयित्वा पुनः

संतन्वन्तः प्रजातन्तून्सुखं दुःखं भवाभवौ ॥ प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥ २१ ॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥ २२ ॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान्कृष्णो भगवान् भुवनेश्वरः ॥ तेषां न्ययुङ्क्त पुरुषान्स्त्रियो मज्जनकर्मणि ॥ २३ ॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥ २४ ॥ भोजयित्वा वरान्नेन सुस्नातान् समलंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥ २५ ॥ ते पूजिता मुकुन्देन राजानो मृष्टकुण्डलाः ॥ विरेजुर्मोचिताः क्लेशात्प्रावृडन्ते यथा ग्रहाः ॥ २६ ॥ रथान्सदश्वानारोप्य मणिकाञ्चनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान्प्रत्ययापयत् ॥ २७ ॥ त एवं मोचिताः कृच्छ्रात्कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥ २८ ॥ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथाऽन्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥ २९ ॥

सहदेवेन तेषां सपर्यां कारयामास इति ॥ २५ ॥ ते इति ॥ ते राजानो मुकुन्देन क्लेशान् मोचिताः पूजिताः अत एव मृष्टानि शुद्धानि कुण्डलानि येषां ते प्रावृडन्ते शरत्काले ग्रहाश्चन्द्रादयो यथा विराजन्ते तथा विरेजुः ॥ २६ ॥ रथानिति ॥ मणियुक्तैः काञ्चनैर्भूषणैर्भूषितांस्तान् राज्ञः सन्तः समीचीना अश्वा येषु तान् रथानारोप्य रथेषूपवेश्य सूनृतैर्मधुरैर्वाक्यैः प्रीणय्य हर्षयित्वा ल्यबार्षः । स्वस्वदेशान् प्रत्ययापयत् प्रस्थापयामास॥२७॥त इति ॥ ते राजानः सुमहात्मना अत्युदारचित्तेन कृष्णेनैवं कृच्छ्रात् क्लेशान्मोचितास्तं कृष्णमेव ध्यायन्तः तथा जगत्पतेस्तस्य कृतानि कर्माणि च ध्यायन्त एव ययुः॥२८॥जगदुरिति ॥ गृहं गत्वा च ते महापुरुषस्य कृष्णस्य चेष्टितं जरासन्धघातादि प्रकृतिभ्यः अमात्यादिभ्यो जगदुः ऊचुः । भगवान्यथा अन्वशासत् अनुशिक्षितवान् "बहुलं छन्दसि" इति शपो लुक् न । तथा अतन्द्रिताः सावधानाः सन्तश्चक्रुश्च॥२९॥

जरासन्धमिति ॥ भीमसेनेन प्रयोज्यकर्त्रा जरासन्धं घातयित्वा तत्पुत्रेण सह देवेन पूजितः पार्थाभ्यां भीमार्जुनाभ्यां संयुतश्च केशवः कृष्णः मागधस्य दिव्यं रथमारुह्य इन्द्रप्रस्थं प्रायात् ॥ ३० ॥ गत्वेति ॥ जितारयः स्वसुहृदो हर्षयन्तः दुर्हृदां दुर्योधनादीनाम् असुखं दुःखमावहन्तीति तथा ते कृष्णभीमार्जुनाः खाण्डवप्रस्थम् इन्द्रप्रस्थं गत्वा शङ्खान् दध्मुः ॥ ३१ ॥ तदिति ॥ तच्छङ्खशब्दं श्रुत्वा इन्द्रप्रस्थनिवासिनो जनाः प्रीतं प्रसन्नं मनो येषां ते तथाभूता जाताः यतो मागधं शान्तं मृतं मेनिरे । राजा युधिष्ठिरश्च आप्तः पूर्णो मनोरथो यस्य तथाभूत आसीत् ॥ ३२ ॥ अभीति ॥ अथानन्तरं भीमादयः आगत्य राजानं युधिष्ठिरमभिवन्द्य आत्मना आत्मभिर्यत्कर्मानुष्ठितं कृतं तत्सर्वमाश्रावयामासुः ॥ ३३ ॥ निशम्येति ॥ धर्मराजो युधिष्ठिरः केशवेनानुकम्पितं कृपया सम्पादितं तत्स्वकार्यं जरासन्धवधं निशम्य श्रुत्वा आनन्दजान् अश्रुबिन्दून् मुञ्चन्प्रेम्णा संस्तब्धः किञ्चनापि प्रशंसनाभिनन्दनादिकं नोवाच किंतु तूष्णीमास ॥ ३४ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकायाम् ॥ गङ्गासहायो दशमे त्रिसप्ततितमे व्यधात् ॥ ७३ ॥

जरासन्धं घातयित्वा भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात्सहदेवेन पूजितः ॥ ३० ॥ गत्वा ते खाण्डवप्रस्थं शङ्खान्दध्मुर्जितारयः ॥ हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥ ३१ ॥ तच्छ्रुत्वा प्रीतमनस इन्द्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥ ३२ ॥ अभिवन्द्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयाञ्चक्रुरात्मना यदनुष्ठितम् ॥ ३३ ॥ निशम्य धर्मराजस्तत्केशवेनानुकम्पितम् ॥ आनन्दाश्रुकलां मुञ्चन्प्रेम्णा नोवाच किञ्चन ॥ ३४ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ श्रीशुक उवाच ॥ एवं युधिष्ठिरो राजा जरासन्धवधं विभोः ॥ कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥ युधिष्ठिर उवाच ॥ ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ॥ वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥ स भवानरविन्दाक्षो दीनानामीश मानिनाम् ॥ धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥ ३ ॥

चतुर्युक्सप्ततितमे यज्ञेऽग्रे पूजनं हरेः ॥ शिशुपालवधाद्यत्र श्लोकाः सार्द्धचतुःशराः ॥ त्रीण्युवाचेति पादाब्धाः पञ्चबाणा अनुष्टुभः ॥ ७४ ॥ एवमिति ॥ राजा युधिष्ठिरो जरासन्धवधं श्रुत्वा तं जरासन्धघातनात्मकं विभोः कृष्णस्यानुभावं प्रभावं च श्रुत्वा एवं पूर्वोक्तप्रकारेण प्रीतः प्रेम्णा विनिमग्नोऽपि पुनः किञ्चिदाश्वासितचित्तः सन्निति शेषः । तं कृष्णमब्रवीत् ॥ १ ॥ ये स्युरिति ॥ ये त्रैलोक्यस्य गुरवः पूज्याः ब्रह्मरुद्रादयः ये च सर्वलोकस्य महेश्वराः पालका इन्द्रादयः स्युः ते सर्वे दुर्लभं लब्ध्वा स्वभाग्यैरेतदुर्लभं लब्धमिति मत्वा यस्य तवानुशासनं शिरसा वहन्ति बहुमानेन पालयन्ति ॥ २ ॥ स इति ॥ हे भूमन् महत्तम यः अरविन्दाक्षो नारायणो भवान् दीनानां विषयासक्तचित्तानां वृथैवेशमानिनामस्माकमनुशासनं धत्ते आज्ञामनुसरतीति यत्तदत्यन्तमननुरूपं विडम्बनं मनुष्यचेष्टानुकरणं स्वतेजोहानिप्रसङ्गादित्यर्थः ।

यद्वा । यदस्मदनुशासनं धत्ते तदस्माकं विडम्बनमपकर्ष एव नतूत्कर्षः यतः परमेश्वरमिमे आज्ञापयति इति लोकैर्वयमुपहस्यामहे ॥ ३ ॥ अस्मदनुशासनधारणेन तव तु न काप्यप्रतिष्ठेत्याह—न हीति ॥ तथापि एकस्य मुख्यस्य अद्वितीयस्य समानासमानरहितस्य ब्रह्मणः परमात्मनः सर्वजीवनियन्तुस्तव नियम्यत्वं सुतरां न वास्तवम् अतः परानुग्रहार्थैः एतैः कर्मभिः आज्ञापनादिभिस्तव तेजो नैव वर्धते । तथानुग्रहेण पराज्ञानुसरणादिभिश्च तेजो नैव ह्रसते तङार्षः । यथा उदयास्तमयादिकर्मभिः रवेरुच्चनीचसंबन्धेनापि तेजो न वर्धते न च ह्रसति तद्वत् ॥ ४ ॥ नेति ॥ हे अजित हे माधव वैकृता विकृतदेहादिविषया ङीबभाव आर्षः । क्वचित्तु वैकृतीत्यपि पाठः । ममाहमिति त्वं तव इति च नानाधीः पशूनां यथा भवति तथा ते तव भक्तानां न भवति तव तु कुतो भवेत् अतः ममेदं कर्म योग्यम् इदमयोग्यम् इत्यभिमानस्तव नास्त्येव । अतो नीचो-

**न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ॥ कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥ न वै तेऽजित भक्तानां ममाहमिति माधव ॥ त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥ श्रीशुक उवाच ॥ इत्युक्त्वा यज्ञिये काले वव्रे युक्तान्स ऋत्विजः ॥ कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः ॥ ६ ॥ द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥ विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः ॥ पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥ अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः ॥ वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥ ९ ॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः ॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः ॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥११॥ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः ॥ कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा ॥ १३ ॥**

च्चकर्मसु तव प्रवृत्तिर्घटते ॥ ५ ॥ इतीति ॥ स पार्थो युधिष्ठिरः इत्येवमुक्त्वा कृष्णेनानुमोदितः अनुज्ञातः सन् यज्ञिये यज्ञार्हे वसन्ते काले ब्रह्मवादिनः युक्तान् योग्यान् ब्राह्मणान् ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥ द्वैपायन इति त्रिकम् ॥ द्वैपायनाद्या अकृतव्रणान्ताः ऋत्विजो वृता इति शेषः ॥ ७ ॥ ८ ॥ ९ ॥ उपहूता इति युग्मम् ॥ हे नृप तथा अन्ये च द्रोणादयः शूद्रान्ताः सर्वे राजानः टजभाव आर्षः । राज्ञां प्रकृतयश्च उपहूताः सन्तो यज्ञं द्रष्टुमिच्छवस्तत्रेयुराजग्मुः ॥ १० ॥ ११ ॥ तत इति ॥ ततस्ते ब्राह्मणाः स्वर्णमयैर्लाङ्गलैर्देवयजनं देवा इज्यन्तेऽस्मिन्निति तत् यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य तत्र यथाम्नायं विध्यनुसारेण नृपं युधिष्ठिरं दीक्षयांचक्रिरे दीक्षाख्यसंस्कारयुक्तमकुर्वन् ॥१२॥ हैमा इत्यर्द्धम् ॥ पुरा वरुणस्य राजसूये यथा हैमा हेममया उपकरणाः पात्रादयः पुंस्त्वमार्षम् । आसंस्तथात्राप्यासन्नित्यर्थः ॥१३॥

इन्द्रादय इति त्रयम् ॥ विरञ्चिभवाभ्यां ब्रह्मरुद्राभ्यां संयुताः सगणाः स्वगणेन सहिताश्चेन्द्रादयो लोकपालाः तथा सिद्धादयः मुनयः सनकादयः यक्षरक्षांसि खगाः गरुडादयः ये समाहूता राजानो राजपत्न्यश्च ते सर्वे पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयं समीयुः स्मेति पादपूर्त्तौ । आगताश्च ते सर्वे अविस्मिताः आश्चर्यरहिता एव मन्तः कृष्णभक्तस्य तस्य राजसूयं सुसम्यक् उपपन्नं सम्पन्नं मेनिरे ॥१४॥१५॥१६॥ अयाजयन्निति ॥ देवानामिव वर्चस्तेजो येषां ते याजका ऋत्विजो यथाविधि राजसूयेन महाराजं युधिष्ठिरम् अयाजयन् । तत्र दृष्टन्तमाह अमरा देवा यथा प्रचेतसं वरुणमयाजयंस्तथेति ॥ १७ ॥ सुत्येति ॥ सुत्येऽहनि सोमाभिषवदिने सौत्य इत्यपि पाठः । अवनीपालो राजा युधिष्ठिरः सुसमाहितः सन् याजकान् अन्यांश्च महाभागान् पूजार्हान् सदसस्पतीन् यथावत् अपूजयत् पूजयितुमारभत ॥ १८ ॥ सदसीति ॥ सभासदः सदसि सभायां सदस्या इति दीर्घपाठे सदस्याः सभ्या तेषु अभ्यर्हणम् अग्रपूजा तस्यार्हं योग्यं विमृशन्तो विचारयन्तोऽपि अनैकान्त्यात् योग्यानां बहुत्वेनैकस्यानिश्चयात् दृश्यमा-

इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥ सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ॥ १४ ॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः ॥१५॥ राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ॥१६॥ अयाजयन्महाराजं याजका देववर्चसः ॥ राजसूयेन विधिवत्प्राचेतसमिवामराः ॥१७॥ सुत्येऽहन्यवनीपालो याजकान्सदसस्पतीन् ॥ अपूजयन्महाभागान् यथावत्सुसमाहितः ॥ १८ ॥ सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ॥ नाध्यगच्छन्ननैकान्त्यात्सहदेवस्तदाब्रवीत् ॥ १९ ॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः ॥ एष वै देवताः सर्वा देशकालधनादयः ॥२०॥ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ॥ अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ॥ २१ ॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ॥ आत्मनाऽऽत्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २२ ॥

नानां च हेतूनां व्यभिचारित्वात् यदेकत्र श्रेष्ठत्वनिश्चयं नाध्यगच्छंस्तदा माद्रीसुतः सहदेवोऽब्रवीत् अयं भावः । ये साधारण्येन सभासदस्ते स्वयमेव पूर्वमग्र्यपूजार्हं विमृशन्तो नाध्यगच्छन् । सर्वज्ञास्तु द्वैपायनादयः चैद्यादिदुर्जनविवादभयात्तूष्णीमेव स्थिताः तदा पूजायामधिकृतः सहदेवो विशेषज्ञोऽब्रवीत् ॥ १९ ॥ अर्हतीति ॥ सात्वतां नारदादीनां पूज्यानामपि पतिः भगवान् अच्युतः श्रीकृष्ण एव श्रैष्ठ्यम् अग्रपूजामर्हति यतः एष एव सर्वा देवताः देशकालधनादयश्चेति ॥ २० ॥ यदिति ॥ इदं विश्वमपि यदात्मकं क्रतवश्च अग्न्यादयश्च चात् आचार्यादयश्च यदात्मकाः साङ्ख्यं ज्ञानकाण्डं यत्परं यत्प्रतिपादनपरं योगश्चोपासना च यत्परः यदाराधनमार्गः पुंशेष आर्षः । लिङ्गविपरिणामेन वाऽन्वयः ॥ २१ ॥ एक इति ॥ हे सभ्याः यस्मात् असौ अद्वितीयः सजातीयविजातीयभेदरहितः अजः एक इव सृष्टेरग्रे आसीदतः सर्वोपादानत्वादिदं जगदैतदात्म्यम् एष श्रीकृष्ण आत्मा यस्य तत् स्वार्थे ष्यञ् । एष एव च आत्मा स्वयमेवाश्रयो यस्यात्मनः सः स्वरूपस्थः आत्मना उपकरणभूतेन विश्वं सृजत्यवति हन्ति च ॥२२॥

विविधानीति ॥ यदवेक्षया यस्य प्रेरणया यदनुग्रहेण च अयं सर्वोऽपि नः इह संसारे विविधानि कर्माणि जनयन् कुर्वन् यतः यस्मादेव धर्मादिलक्षणं श्रेयः फलमीहते साधयति प्राप्नोति कर्माणि तत्फलानि यदधीनानि इत्यर्थः ॥२३॥ तस्मादिति ॥ तस्मात्सर्वथा सर्वश्रेष्ठत्वान्महते कृष्णायैव परमार्हणम् अग्रपूजासाधनं दीयताम् । एवं कृष्णः प्रथमं पूज्यते चेत् तेनैव सर्वभूतानामात्मनः पूजकस्य चार्हणं पूजनं भवेत् ॥ २४ ॥ सर्वेति ॥ दत्तस्य दानस्यानन्त्यं फलानन्त्यमिच्छता कामयमानेन पुरुषेण यद्देयं तत् सर्वभूतानाम् आत्मभूताय अनन्यदर्शिने भेददृष्टिरहिताय शान्ताय रागादिरहिताय आत्मलाभेन पूर्णाय कृष्णाय देयम् ॥ २५ ॥ इतीति ॥ कृष्णानुभाववित् सहदेव इत्येवमुक्त्वा तूष्णीं बभूव । तत्सहदेवोक्तं श्रुत्वा सर्वे सत्तमाः श्रेष्ठाः द्वैपायनादयो द्विजाः साधूक्तं साधूक्तमिति तं तुष्टुवुः प्रशशंसुः ॥ २६ ॥ श्रुत्वेति ॥ द्विजेरितं साधु साध्विति वचनं श्रुत्वा सभासदां सभ्यानामपि हार्दम् अभिप्रायं तथैव ज्ञात्वा राजा युधिष्ठिरः प्रीतः प्रसन्नचित्तः प्रणयेन स्नेहेन विह्वलः परवशः हृषीकेशं श्रीकृष्णं सम्यक् आर्हयत् आडभाववान्

विविधानीह कर्माणि जनयन्यदवेक्षया ॥ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥ २३ ॥ तस्मात्कृष्णाय महते दीयतां परमार्हणम् ॥ एवं चेत् सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २४ ॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ॥ देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २५ ॥ इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित् ॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ २६ ॥ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम् ॥ समार्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २७ ॥ तत्पादाववनिज्यापः शिरसा लोकपावनीः ॥ सभार्यः सानुजामात्यः सकुटुम्बोऽवहन्मुदा ॥ २८ ॥ वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः ॥ अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥ २९ ॥ इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः ॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ ३० ॥ इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः ॥ ३१ ॥

पाठस्तु आर्षः ॥ २७ ॥ तदिति ॥ तस्य कृष्णस्य पादाववनिज्य प्रक्षाल्य लोकान्पावयन्तीति तथाभूतास्ता अपः मुदा भार्यादिसहितः शिरसावहत् मूर्धनि अधारयत् ॥२८॥ वासोभिरिति ॥ पीतैः कौशेयैर्वासोभिः महाधनैर्बहुमूल्यैः भूषणैश्च कृष्णमर्हयित्वा आनन्दाश्रुभिः पूर्णे अक्षिणी यस्य अतस्तं सम्यक् अवेक्षितुं नाशकत् ॥ २९ ॥ इत्थमिति ॥ इत्येवं कृष्णं सभाजितं संपूजितं वीक्ष्य सर्वे जनाः प्राञ्जलयः सन्तो नमो जयेति वदन्तस्तं नेमुः । खात् आकाशात्पुष्पवृष्टयश्च पेतुः निपेतुः इत्यपि पाठः ॥ ३० ॥ इत्थमिति ॥ इत्थं कृष्णगुणवर्णनं निशम्य कृष्णगुणवर्णनेन जातो मन्युर्यस्य सः अमर्षी अभीतश्च दमघोषसुतः शिशुपालः स्वपीठात् स्वासनादुत्थाय सदसि सभामध्ये बाहुमुत्क्षिप्योद्धृत्य भगवते कृष्णाय परुषाणि निन्दावचनानि संश्रावयन् इदं वक्ष्यमाणमाह स्म । अत्र तोषणी । शिशुपालदन्तवक्त्रयोः पार्षदत्वाद्धरिर्वासुरभावानुकरणम् अतः साङ्गोपाङ्गपूजानन्तरमेव कृष्णनिन्दनं तस्मात्तद्वचासि अर्थान्तरं वास्तवम् अन्येषु गीर्देवीप्रेरणात् युद्धरसपोषार्थमेतद्वच इति ॥ ३१ ॥

ईश इति ॥ काल ईशः सर्वं कर्तुं समर्थः अत एव दुरत्ययः केनाप्यनुल्लङ्घ्यः इति कालमाहात्म्यवादिनी श्रुतिः । सत्यवती यथार्था यत् यस्मात् कालप्रभावात् ज्ञानवयोवृद्धानामपि बुद्धिर्बालस्य न्यूनवयस्कस्याज्ञस्य सहदेवस्य वाक्यैर्विभिद्यते भ्रान्ता भवति ॥ ३२ ॥ यूयमिति ॥ हे सदसस्पतयो यूयं सर्वे पूजापात्रविदां मध्ये श्रेष्ठाः अतः अर्हणे पूजायां कृष्णः सम्मत इति यत् बालस्याज्ञस्य भाषितं तत् मा मन्ध्वं मा गृह्णीत श्यनो लोप आर्षः । कचिन्मा मन्यध्वमिति नवाक्षरपादपाठः । वास्तवार्थस्तु सहदेववचनं बालभाषितं मा मन्यध्वं किन्तु सत्यमेव अतः कृष्णोऽर्हणे सम्मत एव ॥ ३३ ॥ तप इति युग्मम् ॥ तपः अनशनादि विद्याभ्यासः व्रतं कृच्छ्रादि तेषां धरान् धारकान् ज्ञानेन विध्वस्तं कल्मषं पापं येषां तान् परमर्षीन् मन्त्राद्यर्थज्ञान् ब्रह्मणि निष्ठा स्थितिर्येषां तान् अत एव लोकपालादिभिः पूजितान् सदसस्पतीन् अतिक्रम्य अनादृत्य कुलं क्षत्रियकुलं पांसयति पांसुं करोति पांसुशब्दात् तत्करोतीति णिच् ल्युट् । गोपालः सपर्यां पूजां कथमर्हति यथा देवयोग्यं पुरोडाशं काको नार्हति तथा वस्तुतस्तु गोपालो वेदपृथिव्यादिपालकः कुत्सितं वेदविरुद्धं लपन्ति कुलपाः पाखण्डाः तान् अंसयति समाघातयति " अंस समाघाते " । स परमेश्वरः कं सुखं च अकं दुःखं च काके ते न

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ॥ वृद्धानामपि यद् बुद्धिर्बालवाक्यैर्विभिद्यते ॥३२॥ यूयं पात्रविदां श्रेष्ठा मान्यध्वं बालभाषितम् ॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे ॥ ३३ ॥ तपोविद्याव्रतधराञ्ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३४ ॥ सदसस्पतीनतिक्रम्य गोपालः कुलपांसनः ॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥३५॥ वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ॥ स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३६ ॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ॥ वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥ ३७ ॥

विद्येते यस्य सः आप्तकाम इत्यर्थः । स यथा देवयोग्यं पुरोडाशमात्रं नार्हति किंतु सर्वस्वमपि । तथायं ब्रह्मर्षियोग्यं सपर्यामात्रं नार्हति किंतु आत्मार्पणमपि अतोऽहमात्मानमेवार्पयिष्यामि ॥ ३४ ॥ ३५ ॥ वर्णेति ॥ वर्णादिभ्यो पेतः भ्रष्टः सर्वधर्मेभ्यो बहिष्कृतः स्वैरवर्ती स्वेच्छाचारः गुणैर्हीनश्च सपर्यां कथमर्हति वस्तुतो ब्रह्मरूपत्वात् वर्णाश्रमादिरहितः " अनामगोत्र " मिति श्रुतेः । अत एवानधिकारित्वात्सर्वैर्द्धर्मैर्बहिष्कृतः स्वैरवर्ती परमेश्वरत्वात् अतः एव निर्गुणः स जीवयोग्यं तुच्छं सपर्यामात्रं कथमर्हति ॥ ३६ ॥ यादवानपि निन्दति—ययातिनेति ॥ कुलवृद्धेन ययातिना एषां यादवानां कुलं शप्तं राज्यानर्हं कृतमतः सद्भिरपि बहिष्कृतं राज्यान्निराकृतं शश्वत् सदा वृथा पापरतं परपीडाकरं वृथापानरतमिति पाठे तु सौत्रामणीयज्ञादिव्यतिरिक्तेऽपि मद्यपाने रतं तत्र कुले जातः कृष्णः सपर्यां कथमर्हति वस्तुतः ययातिना शप्तमपि सद्भिर्मुनिभिस्तत्तद्यजनादिना तस्माच्छापाद्बहिष्कृतं मोचितम् । यद्वा । ययातिना शप्तमपि किं सद्भिर्बहिष्कृतम् अपि तु शिरसा धृतम् अतः पानं पृथ्वीपालनं तत्र रतमासक्तं वृथा सपर्यां कथमर्हतीति किंतु सफलामेवेत्यर्थः । यद्वा । वृथा स्वार्थानपेक्षमेव पालने रतम् ॥ ३७ ॥

ब्रह्मेति ॥ ब्रह्मर्षिसेवितान् मथुरादिदेशान् हित्वा ब्रह्मवर्चसं वेदाध्ययनादिजनितं तेजस्तन्नाशकमब्रह्मवर्चसं दुर्गं दुर्गमं समुद्रं समुद्रमध्यस्थं द्वारकादेशमाश्रित्य दस्यव एते यादवाः प्रजाः कर्मभूताः बाधन्ते वस्तुतः ब्रह्मर्षिसेवितान् देशान् हित्वा "डुधाञ् पोषणे" पोषयित्वेत्यर्थः । तेन ब्रह्मवर्चसं ब्राह्मं तेजश्च संपोष्य अदस्यवः प्रबलशत्रुरहिता अपि लीलया समुद्रं दुर्गमाश्रित्य स्थिता एते यादवाः प्रजा बाधन्ते किं काका नैवेत्यर्थः ॥ ३८ ॥ एवमिति ॥ नष्टं मङ्गलं यस्य स शिशुपालः एवमादीनि अन्यान्यपि अमङ्गलानि भगवन्निन्दावचनानि बभाषे भगवाँस्तु किंचिदपि नोवाच । यथा शिवारुतं शृगालभाषितं श्रुत्वापि सिंहो न किमपि ब्रूते तद्वत् ॥ ३९ ॥ भगवदिति ॥ तद्दुःसहं भगवन्निन्दनं श्रुत्वा सभासदो रुषा क्रोधेन चेदिपं शिशुपालं शपन्तो म्रियतामयं दुरात्मेति वदन्तः कर्णौ पिधाय ततो निर्जग्मुः ॥ ४० ॥ निन्दामिति ॥ भगवतस्तत्परस्य भगवद्भक्तस्य जनस्य वा निन्दां शृण्वन् यः पुमांस्ततः स्थानान्नापैति न निर्गच्छति स श्रोतापि सुकृतात् पुण्यात् च्युतो भ्रष्टोऽधो नरकं याति अपिना निन्दकस्तु

ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसम् ॥ समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३८ ॥ एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ॥
नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम् ॥ ३९ ॥ भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ॥ कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं
रुषा ॥ ४० ॥ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४१ ॥ ततः पाण्डुसुताः क्रुद्धा मत्स्यकेकयसृञ्जयाः ॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४२ ॥ ततश्चैद्यस्त्वसंभ्रान्तो जगृहे खड्गचर्मणी ॥
भर्त्सयन्कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ ४३ ॥ तावदुत्थाय भगवान्स्वान्निवार्य स्वयं रुषा ॥ शिरः क्षुरान्तचक्रेण जहारापततो रिपोः
॥ ४४ ॥ शब्दः कोलाहलोऽप्यासीच्छिशुपाले हते महान् ॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४५ ॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४६ ॥

नरकं यात्येव ॥ ४१ ॥ तत इति ॥ ततः उद्यतान्यायुधानि यैस्तथाभूताः पाण्डुसुताः मत्स्यादयश्च भगवन्निन्दनेन क्रुद्धाः सन्तः शिशुपालं जिघांसवः हन्तुमिच्छवः सन्तः उत्तस्थुः ॥ ४२ ॥ तत इति ॥ हे भारत ततश्च सदसि सभायां कृष्णपक्षीयान् युधिष्ठिरादीन् राज्ञो भर्त्सयन् वचसा तिरस्कुर्वन् असंभ्रान्तो निर्भयश्चैद्यः शिशुपालोऽपि तान् हन्तुं खड्गचर्मणी जग्राह ॥ ४३ ॥ तावदिति ॥ एष मत्पार्षदो महाबलः अत एतान् सर्वानेव हन्यादिति मत्वा तावत्तत्क्षणमेव भगवान् कृष्णः उत्थाय स्वान्पाण्डवादीन्निवार्य रुषा क्षुरस्येवान्तो धारा यस्य तेन चक्रेण स्वयमेव आपततो रिपोः शत्रोस्तस्य शिरो जहार चिच्छेद ॥ ४४ ॥ शब्द इति ॥ एवं शिशुपाले निहते सति महानुच्चैः कोलाहलः महाशब्द आसीत् तस्य चैद्यस्यानुयायिनो जीवितैषिणो भूपा दुद्रुवुः ॥ ४५ ॥ चैद्येति ॥ चैद्यस्य देहादुत्थितं निःसृतं ज्योतिर्जीवात्मकं तेजः पार्ष-

दवथुरेव वा तस्या नश्वरत्वात् सर्वभूतानां पश्यतामेव सतां वासुदेवं श्रीकृष्णमुपाविशत् तत्सायुज्यं प्राप। यथा खात् आकाशात् च्युता उल्का तेजोविशेषो यथा भुवि प्रविशति तद्वत् ॥ ४६ ॥ जन्मेति ॥ हिरण्यकशिपुरावणशिशुपाललक्षणजन्मत्रये अनुगुणितमनुवर्तितं यद्वैरं द्वेषस्तेन संरब्धया आविष्टया धिया कृष्णं ध्यायन् तन्मयतां यातः पुनस्तल्लोके पार्षदो बभूव पार्श्वं जग्मतुरिति सप्तमस्कन्धोक्तेः। हि यस्मात् भावोऽनुचिन्तनमेव भवस्य ध्येयाकारशुभाशुभजन्मनः कारणं पेशस्कारिध्यानेन कीटादौ तत्सिद्धेः ॥ ४७ ॥ ऋत्विग्भ्य इति ॥ दिग्विजयस्य जातत्वात् एक एव राजत इत्येकराट् युधिष्ठिरः सदसि भवाः सदस्यास्तैः सहितेभ्यः ऋत्विग्भ्यः विपुलां महतीं दक्षिणामदात् पूजार्हांश्च सर्वान्संपूज्य विधिवदवभृथं नाम यज्ञान्तस्नानं चक्रे ॥ ४८ ॥ साधयित्वेति ॥ एवं राज्ञो युधिष्ठिरस्य क्रतुं राजसूयं साधयित्वा सुहृद्भिः पृथार्जुनादिभिरभियाचितः प्रार्थितः योगेश्वरेश्वरः कृष्णः कतिचिन्मासांस्तत्रैवोवास ॥ ४९ ॥ तत इति ॥ स्वगमनमनिच्छन्तमपि राजानं युधिष्ठिरमनुज्ञाप्य पृष्ट्वा भार्यादिसहितः ई-

जन्मत्रयानुगुणितवैरसंरब्धया धिया॥ ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥४७॥ ऋत्विग्भ्यः स सदस्येभ्यो दक्षिणां विपुलामदात् ॥
सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥४८॥ साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः ॥ उवास कतिचिन्मासान्सुहृद्भिरभियाचितः ॥४९॥
ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ॥ ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ५० ॥ वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ॥
वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥ ५१ ॥ राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५२ ॥
राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ॥ कृष्णं क्रतुं च शंसन्तः स्वधामानि ययुर्मुदा ॥ ५३ ॥ दुर्योधनमृते पापं कलिं कुरुकुलामयम् ॥
यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥ ५४ ॥ य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ॥ राजमोक्षवितानं च सर्वपापैः प्रमुच्यते
॥ ५५ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे शिशुपालवधो नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

श्वरो देवकीसुतः कृष्णः स्वपुरं द्वारकां ययौ ॥ ५० ॥ वर्णितमिति ॥ वैकुण्ठवासिनोर्जयविजययोर्विप्राणां सनकादीनां शापाद्धेतोः पुनः पुनर्यज्जन्म तद्विषयकमुपाख्यानं च तन्मया ते तुभ्यं बहुविस्तरं यथा तथा वर्णितम् ॥ ५१ ॥ राजेति ॥ राजसूयसंबन्धिनावभृतेन स्नातो युधिष्ठिरः राजा ब्राह्मणादिसभामध्ये सुरराट् इन्द्र इव शुशुभे ॥५२॥ राज्ञेति ॥ राज्ञा युधिष्ठिरेण सभाजिताः संपूजिताः सुरा मानवाः खेचराश्च सर्वे कृष्णं क्रतुं च शंसन्तः स्तुवन्तो मुदा हर्षेण स्वस्वधामानि प्रति ययुः ॥ ५३ ॥ दुर्योधनमिति ॥ यो दुर्योधनस्तां सर्वजनानन्दकरीं स्फीतां समृद्धां पाण्डुसुतस्य युधिष्ठिरस्य श्रियं सम्पदं दृष्ट्वा न सेहे तमेकं कुरुकुलस्यामयं रोगवन्नाशकं पापं धर्मद्विषं कलिं कलेरंशं दुर्योधनं विना सर्वे मुदा ययुरिति पूर्वेणैवान्वयः ॥ ५४ ॥ य इति ॥ यः पुमान् इदं चैद्यवधादिकं विष्णोः कर्म राज्ञां जरासन्धनिरुद्धानां ततो मोक्षं वितानं यज्ञमहो-

त्सर्वं च कीर्तयेत् उपलक्षणतया शृणुयात्स्मरेद्वा । स सर्वपापैः प्रमुच्यते ॥ ५५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायोऽत्र चतुःसप्तते दशमे व्यधात् ॥ ७४ ॥ पञ्चयुक्सप्ततितमे यज्ञस्यावभृथोत्सवः ॥ दुर्योधनापमानोऽत्र श्लोकाः सार्द्धाः खवाब्धयः ॥ द्वे उवाचेति पादोनास्तर्कवेदा अनुष्टुभः ॥ ७५ ॥ अजातशत्रोरिति युग्मम् ॥ हे ब्रह्मन् एकं दुर्योधनं वर्जयित्वा ये तत्र समागतास्ते सर्वे नृदेवादयः अजातशत्रोर्युधिष्ठिरस्य तं राजसूयस्य महोदयं महान्तमुत्सवं दृष्ट्वा मुमुदिरे इति नोऽस्माभिस्त्वत्तः श्रुतं हे भगवन् तत्र दुर्योधनस्य असंतोषे कारणमुच्यताम् ॥ १ ॥ २ ॥ प्रश्नमुत्तरयिष्यन् पूर्ववर्णितयागमहोत्सवशेषं वर्णयति—पितामहस्येति ॥ महात्मनः ते तव पितामहस्य युधिष्ठिरस्य राजसूये यज्ञे प्रेमबन्धनाः तस्य प्रेमैव बन्धनं येषान्ते तस्य बान्धवाः परिचर्यायामासन् तत्तत्कार्यसाधका बभूवुरित्यर्थः । प्रेमबन्धना इत्यनेन ते स्वयमेव तत्तत्कर्मणि प्रवृत्ताः नतु राज्ञा प्रवर्त्तिताः अतः साभिमानानामशक्ये पादावनेजनकर्मणि कृष्णः स्वयमेव प्रवृत्तः॥ ३॥ भीम इति ॥ भीमो महानसं पाक-

राजोवाच ॥ अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ॥ सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥ दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ॥ इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥ श्रीशुक उवाच ॥ पितामहस्य ते यज्ञे राजसूये महात्मनः ॥ बान्धवाः परिचर्यायां तस्यासन्प्रेमबन्धनाः ॥ ३ ॥ भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ॥ सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४ ॥ गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ॥ परिवेषणे द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥ युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ॥ बाह्लीकपुत्रा भूर्याद्या ये च संतर्दनादयः ॥ ६ ॥ निरूपिता महायज्ञे नानाकर्मसु ते तदा ॥ प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥ ७ ॥ ऋत्विक्सदस्यबहुवित्सुसुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ॥ चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥

शाला तत्र अध्यक्षो नियोक्ता कापि पाककर्त्ता च आसीत् इत्यादिर्द्वयोरन्वयः स्फुटः । द्रव्यसाधने नानावस्तुसम्पादने ॥४॥ गुर्विति ॥ गुरूणां शुश्रूषणे चन्दनालेपादौ द्रुपदजा द्रौपदी पुल्लिङ्गपाठे धृष्टद्युम्नः महामनाः कार्यकुशल इति सर्वेषां विशेषणम्॥५॥युयुधान इति॥युयुधानः सात्यकिः विकर्णो दुर्योधनभ्राता हार्दिक्यः कृतवर्मा बाह्लीकपौत्रो भूरि आदिना भूरिश्रवःप्रमुखाः पुत्रा इति पुत्रपौत्रयोरभेदात् ये च सन्तर्दनः पृथाभागिनेयः तद्भ्रातृप्रमुखाः तदादयः स्वस्वकर्मसु आसन्॥६॥निरूपिता इति ॥हे राजेन्द्र एवं भीमादयः तदा महायज्ञे नानाकर्मसु निरूपिताः प्रयुक्ताः सन्तो राज्ञा युधिष्ठिरस्य प्रियं कर्तुमिच्छवो यथा नियोगं प्रवर्तन्ते स्म प्रावर्तन्त भीष्मादयस्तु प्रेमबन्धनत्वात्स्वयं प्रवृत्ता अनुमोदिता एव॥ ७ ॥ ऋत्विगिति ॥ ऋत्विजश्च सदस्याश्च बहुविदः सर्वज्ञाश्च तेषु सुहृत्तमेषु मित्रसंबन्धिबान्धवादिषु च सूनृतं प्रियवचः समर्हणमलंकारादिदक्षिणा च ताभिः यथोचितं स्विष्टेषु सम्यक् पूजितेषु सत्सु चैद्ये सात्वतपतेः श्रीकृष्णस्य चरणं प्रविष्टे सति सर्वे ततो द्युनद्यां गङ्गायामवभृथसंज्ञकस्नपनं चक्रुः ॥ ८ ॥

मृदङ्गेति ॥ अवभृथसंबन्धिनि उत्सवे मृदङ्गादयोऽन्यानि च विचित्राणि वादित्राणि नेदुः । धुन्धुरी आनद्धवाद्यभेदः ॥ ९ ॥ नर्तक्य इति ॥ पूर्वार्द्धं स्पष्टम् स तेषां गायकादीनां वीणादिकानामुन्नादो दिवमन्तरिक्षमस्पृशत् व्याप्तवान् ॥ १० ॥ चित्रेति ॥ रुक्मस्य स्वर्णस्य माला एषां सन्ति ते भूपाः चित्राणि ध्वजपताकाग्र्याणि येषां तैरिभेन्द्रैः स्यन्दनैः रथैः अर्वभिः अश्वैः स्वलंकृतैर्भटैश्च एवं चतुरङ्गसैन्यैर्निर्ययुः ॥ ११ ॥ यद्विति ॥ यजमानो युधिष्ठिरः पुरसरः पुरोयायी येषां ते यादवादयः सैन्यैर्भुवं कम्पयन्तो निर्ययुरित्यनुषङ्गः ॥ १२ ॥ सदस्येति ॥ सदस्याश्च ऋत्विजश्च अन्ये च द्विजश्रेष्ठा भूयसा महता ब्रह्मघोषेण वेदपाठघोषेण सह निर्ययुः । देवादयस्तु पुष्पवर्षिणः सन्तस्तुष्टुवुः ॥ १३ ॥ स्वलंकृता इति ॥ गन्धादिभिः स्वलंकृता नरा नार्यश्च विविधै रसैः परस्परं विलिम्पन्त्योऽभिषिञ्चन्त्यश्च विजह्रुः ॥ १४ ॥ रसानेवाह—तैलेति ॥ पुंभिः कर्तृभिस्तैलादिभिर्लिप्ता वारयोषितो वेश्यास्तैरेव तान् प्रलिम्पन्त्यो विजह्रुः गोरसो दधिक्षीरादिः गन्धोदकं चन्दनाद्युदकम् ॥ १५ ॥ गुप्ता इति ॥ यथा एतदवभृथस्न-

मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः॥ वादित्राणि विचित्राणि नेदुरावभृथोत्सवे॥९॥नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः॥वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥ चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥ यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः ॥ कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥ सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ॥ देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥ स्वलंकृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ॥ विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥ तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ॥ पुम्भिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥ गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ॥ ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥ ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥

पनमुपलब्धुं दिवि देव्यो देवाङ्गना विमानवरैर्निरगमन् तथा द्रष्टुं नृभिर्भटैः गुप्ता नृदेव्यो युधिष्ठिरपत्न्यः द्रौपदीयौधेयीप्रभृतयः रथादिभिर्निरगमन् निर्जग्मुः । ताश्च मातुलेयैर्भ्रात्रादिभिः सखिभिर्भीमार्जुनादिभिश्च परिषिच्यमानाः सव्रीडेन लज्जासहितेन हासेन विकसन्ति वदनानि यासां ता विरेजुः । अत्र यथा पत्युर्भागिनेये भागिनेयशब्दः प्रयुज्यते तथा पत्युर्मातुलेये मातुलेयशब्दः प्रयुक्तः । तस्य देवरत्वेन परिहासौचित्यात् स्वमातुलेयस्य तु भ्रातृत्वेन परिहासानौचित्यात् ॥ १६ ॥ ता इति ॥ क्लिन्नानि सिक्तानि अम्बराणि यासां ताः अत एव विवृतं व्यक्तं गात्रं शरीरं कुचावूरू मध्यप्रदेशश्च यासां ता औत्सुक्यात्तत्प्रयुक्तजलक्रीडातिशयात् मुक्तेभ्यः श्लथद्बन्धेभ्यः कबरेभ्यः च्यवमानानि गलन्ति माल्यानि पुष्पाणि यासां तादृश्यस्ता दृतीभिरुदकनोदनचर्मयन्त्रैर्देवरान् पतिभ्रातॄन् उत अपि सखीनपि सिषिचुः । एवं च

रुचिरैर्विहारैः मलधियां काममलवासितान्तःकरणानां दुर्योधनादीनां नतु साधूनां क्षोभं चित्तचाञ्चल्यं कामोद्रेकं दधुः चक्रुः ॥ १७ ॥ स इति ॥ सन्तः समीचीना अश्वा यस्य तं रुक्ममाला अस्य सन्तीति तथा तं रथमारूढः स सम्राट् युधिष्ठिरः स्वपत्नीभिर्द्रौपद्यादिभिः व्यरोचत । क्रियाभिः प्रयाजादिभिर्यथा क्रतुराट् मूर्तिमान् राजसूयो व्यरोचत तथेति ॥ १८ ॥ पत्नीति ॥ पत्नीसंयाजो यागविशेषः अवभृथसंबन्धिकर्माणि आवभृथ्यानि तैश्चरित्वाताननुष्ठाय ते ऋत्विजः आचान्तं कृताचमनं कृष्णया द्रौपद्या सहितं तं राजानं गङ्गायां स्नापयांचक्रुः ॥ १९ ॥ देवेति ॥ नराणां दुन्दुभिभिः समं सह देवानां दुन्दुभयो नेदुः देवादयः पुष्पवर्षाणि मुमुचुः ॥ २० ॥ सस्नुरिति॥ यजमानस्नानानन्तरं चातुर्वर्ण्यचातुराश्रम्यवन्तः सर्वे नरास्तत्र गङ्गायां सस्नुः स्नानं चक्रुः । यतः स्नानात् महापातकी ब्रह्महत्यावानपि किल्बिषात् ततः पातकात्

स सम्राड् रथमारूढः सदश्वं रुक्ममालिनम् ॥ व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ॥ आचान्तं स्नापयाञ्चक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥ देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ॥ मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥ सस्नुस्तत्र गताः सर्वे वर्णाश्रमयुता नराः ॥ महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥ अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः ॥ ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ॥ २२ ॥ बन्धुज्ञातिनृपान्मित्रसुहृदोन्यांऽश्च सर्वशः ॥ अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥ सर्वे जनाः सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ॥ नार्यश्च कुण्डलयुताऽलकवृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥ अथर्त्विजो महाशीलाः सदस्या ब्रह्मवादिनः ॥ ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥ देवर्षिपितृभूतानि लोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥ हरिदासस्य राजर्षे राजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा ॥ २७ ॥

सद्यो विमुच्येत अतः पातकनिवृत्त्यर्थं सर्वे सस्नुः ॥ २१ ॥ अथेति ॥ अथ स्नानानन्तरम् अहते नूतने क्षौमे वस्त्रे परिधाय स्वलंकृतो राजा आभरणादिभिः ऋत्विगादीन् आनर्च पूजितवान् ॥ २२ ॥ बन्ध्विति ॥ नारायणपरायणो नृपो युधिष्ठिरः बन्ध्वादीन् सर्वानभीक्ष्णं पुनः पुनः पूजयामास ॥ २३ ॥ सर्वे इति ॥ सुराणामिव रुक् कान्तिर्येषां ते तथा मणिकुण्डलाभ्यां सहिताः स्रगादयो येषां ते सर्वे जना विरेजुः तथा कुण्डलयुगेन अलकवृन्देन च जुष्टस्य वक्त्रस्य श्रीर्यासां ता नार्यश्च कनकमय्या मेखलया कटिसूत्रेण विरेजुः ॥ २४ ॥ अथेति युग्मम् ॥ हे नृप ये समागताः पूजिताश्च ते महाशीलाः सुस्वभावाः महाशाला इति पाठे परमकुलीनाः ऋत्विगादयः अथानन्तरं तं राजानमनुज्ञाप्य पृष्ट्वा स्वधामानि ययुः ॥ २५ ॥ २६ ॥ हरीति ॥ हरिदासस्य राजर्षेः युधिष्ठिरस्य राजसूयमहोत्सवं प्रशंसन्तः सर्वे नैवातृप्यन् यथा मर्त्यो मरण-

धर्मको मनुष्यादिरमृतं पिबन् न तृप्यति तद्वत् ॥ २७ ॥ तत इति ॥ ततः त्यागात् विश्लेषात् कातरो भीतः राजा युधिष्ठिरः सुहृदो मित्राणि संबन्धिनो विवाह्याः बान्धवा गोत्रिणः तान् कृष्णं च प्रेम्णा निवासयामास ॥ २८ ॥ भगवानिति ॥ अङ्ग हे राजन् तस्य युधिष्ठिरस्य प्रियंकरः प्रियं चिकीर्षुः भगवानपि कुशस्थलीं द्वारकां प्रति साम्बादीन् यदुवीरान् प्रस्थाप्य स्वयं तत्रैव न्यवात्सीत् ॥ २९ ॥ इत्थमिति ॥ इत्थं धर्मसुतो राजा युधिष्ठिरः अन्यैर्दुस्तरमपि मनोरथं राजसूयसमाप्तीच्छारूपं महार्णवं कृष्णेन कर्णधारस्थानीयेन समुत्तीर्य समाप्य गतज्वरो निश्चिन्त आसीत् ॥ ३० ॥ एकदेति ॥ एकदा अच्युते आत्मा मनो यस्य तस्य युधिष्ठिरस्यान्तःपुरे श्रियं सम्पदं तथा राजसूयस्य महित्वं च वीक्ष्य स्वस्य तदभावात् दुर्योधनः अतप्यत् ॥ ३१ ॥ यस्मिन्निति ॥ यस्मिन्नन्तःपुरे विश्वसृजा विश्वकर्मणा मयेन भगवता वा उपक्लृप्ता रचिता नानाविधा नरेन्द्रादीनां योग्या लक्ष्मीर्लक्ष्म्योर्भोग्या विभूतयो भान्ति पूर्वसवर्णदीर्घ आर्षः । ताभिर्विभूतिभिः सह: द्रुपदराजसुता द्रौपदी पतीन् युधिष्ठिरादीन् उपतस्थे

ततो युधिष्ठिरो राजा सुहृत्संबन्धिबान्धवान् ॥ प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ २८ ॥ भगवानपि तत्राङ्ग न्यवात्सीत्त-
त्प्रियङ्करः ॥ प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥ २९ ॥ इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ॥ सुदुस्तरं समुत्तीर्य कृष्णे-
नासीद्गतज्वरः ॥ ३० ॥ एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ॥ अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः ॥ ३१ ॥ यस्मिन्नरे-
न्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ॥ ताभिः पतीन्द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराड-
तप्यत् ॥ ३२ ॥ यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ॥ मध्ये सुचारुकुचकुङ्कुमशोणहारं श्रीमन्मुखं
प्रचलकुण्डलकुन्तलाढ्यम् ॥ ३३ ॥ सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ॥ वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥
आसीनः काञ्चने साक्षादासने मघवानिव ॥ पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च बन्दिभिः ॥ ३५ ॥

सेवितवती राज्ञो देवांशत्वात् यस्यां विभूतियुक्तायां द्रौपद्यां विषक्तं हृदयं यस्य सः कुरुराट् दुर्योधनोऽतप्यत् ॥ ३२ ॥ यस्मिन्निति ॥ यस्मिंश्चान्तःपुरे तदा दुर्योधनपरिहासकाले श्रोणीभरेण नितम्बभरेण च हेतुना शनकैर्गच्छदिति शेषः । क्वणद्भिः आभरणैः शब्दं कुर्वद्भिरङ्घ्रिभिः शोभा यस्य तत् मध्ये सुचारु चारुमध्यमित्यर्थः । कुचकुङ्कुमैः शोणा हारा यस्य तत् श्रीमन्ति मुखानि यस्य तत् प्रचलैः चपलैः कुण्डलैः कुन्तलैश्चाढ्यं सम्पन्नं मधुपतेः श्रीकृष्णस्य महिषीणां सहस्रमशोभतेति शेषः । इदं च बहुत्वोपलक्षणम् ॥ ३३ ॥ सभायामिति युग्मम् ॥ तस्मिन्नन्तःपुरे मयदानवेन क्लृप्तायां सभायां क्वापि कदाचित् अनुजैर्बन्धुभिश्च स्वचक्षुषा चक्षुर्वद्धिता हितज्ञापकेन श्रीकृष्णेनापि परिवृतः पारमेष्ठ्यश्रिया चक्रवर्तियोग्यछत्रचामरादिशोभया जुष्टः सेवितः बन्दिभिश्च स्तूयमानः काञ्चने आसने आसीनः अधिराट् राजा धर्मसुतो युधिष्ठिरः

साक्षात् मघवा निन्द्र इव विरेजे ॥ ३४ ॥ ३५ ॥ तत्रेति ॥ मानी साहंकारः भ्रातृभिर्दुःशासनादिभिः परीतः परिवृतः असिहस्तः किरीटं च माला च विद्येते यस्येति किरीटमाली । यद्वा । महार्घ्यकिरीटमालाः किरीटाग्राणि तद्वान् प्रशंसायामिनिः । दुर्योधनः रुषा द्वारपालादीन् क्षिपन् क्रोशन् हे नृप तत्र सभायां न्यविशत् तङभाव आर्षः ॥ ३६ ॥ स्थल इति ॥ सभानिर्माणकर्त्रा मयेन यो हि कश्चिद्दुष्टचित्तोऽत्र प्रविशेत्स एवं भ्रान्तो भवत्विति काचिन्माया देवतारूपा तत्र स्थापिता तया विमोहितः सः स्थले एव भ्रान्त्या जलं मत्वा तत्रैव स्थलेऽपि वस्त्रान्तम् अभ्यगृह्णात् आकुञ्चितवान् इत्येकवाक्येऽपि स्थलशब्दद्वयान्वयः सह्यः । तथास्थलवद्भ्रान्त्या जलमेव स्थलं मत्वा जले च अपतत् अत्राधिक्षेपभयादेव द्वाःस्थादयो मार्गदर्शनार्थन्नागमन्निति ज्ञेयम् ॥ ३७ ॥ जहासेति ॥ अङ्ग हे राजन् तमेवंभूतं दुर्योधनं दृष्ट्वा भीमो जहास तथा स्त्रियः परे नृपतयश्च राज्ञा युधिष्ठिरेण निवार्यमाणा अपि कृष्णेनानुमोदिताः कटाक्षेण प्रेरिताः सन्तो जहसुः ॥ ३८ ॥ स इति ॥ स दुर्योधनः तेनोपहासेन व्रीडितो लज्जितः अत

तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ॥ किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥ ३६ ॥ स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ॥
जले च स्थलवद् भ्रान्त्या मयमायाविमोहितः ॥ ३७ ॥ जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ॥ निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः
॥३८॥ स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ॥ हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ॥३९॥
बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥४०॥ एतत्तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ सुयोधनस्य दौरात्म्यं राजसूये
महाक्रतौ ॥ ४१ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे दुर्योधनमानभङ्गो नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

एत अवाग्वदनः अधोमुखः रुषा क्रोधाग्निना ज्वलन् तूष्णीं राजानं प्रति स्वगमनप्रश्नादिकमकृत्वैव सभातो निष्क्रम्य गजाह्वयं हस्तिनापुरं ययौ । तस्माद्दुष्टानिष्टशङ्कासूचकः भाव्यनर्थसूचको वा सतां सत्पुरुषाणां हा हेति महान् शब्दोऽभूत् । अजातशत्रुर्युधिष्ठिरः विमना इव इव एवार्थे । अजातशत्रुत्वात्तद्दुःखेन दुःखितः अभवत् ॥ ३९ ॥ बभूवेत्यर्द्धम् ॥ भुवो भरं भारं समुज्जिहीर्षुः अद्य सम्पादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वा भगवान् श्रीकृष्णस्तु तूष्णीमेव बभूव । यस्य भगवतः दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रान्तिं प्राप । मयमाया तु निमित्तमात्रम् । भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादिहास्येन च तस्य पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ४० ॥ एतदिति ॥ हे राजन् त्वया यत् इह महाक्रतौ राजसूये दुर्योधनस्यासन्तोषकारणमहं पृष्टस्तदेतत् सुयोधनस्य दौरात्म्यं ते तुभ्यं मयाभिहितं कथितम् ॥ ४१ ॥
इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे व्यदधात्पञ्चसप्तते ॥ ७५ ॥

षट्सप्ततितमे शाल्ववृष्णियुद्धे तु सारथिः ॥ प्रद्युम्नमनयद्युद्धात् तत्र श्लोकास्त्रिवेदयः ॥ द्वे उवाचेति कथिते श्लोकतुल्या अनुष्टुभः ॥ ७६ ॥ अथेति ॥ हे नृप सौभं नाम पुरं तस्य पतिः शाल्वो यथा हतस्तथा तद्धननात्मकमन्यदपि क्रीडार्थं नरस्येव शरीरं यस्य तस्य कृष्णस्याद्भुतं कर्म शृणु ॥ १ ॥ शिशुपेति ॥ रुक्मिण्युद्वाहे आगतः शिशुपालस्य सखा शाल्वः संख्ये युद्धे यदुभिर्निर्जितः तथा जरासन्धादयोऽपि निर्जिताः॥२॥शाल्व इति ॥ तदा सर्वभूभुजां राज्ञां शृण्वतामेव शाल्वः क्ष्मां भूमिमहमयादवीं यादवरहितां करिष्ये उपसर्जनाङ्कीबार्षः । यद्वा । यदूनामियं यादवी यदुसंबन्धवती न यादवी अयादवी तादृशीं करिष्ये । यूयं मम पौरुषं पश्यतेति प्रतिज्ञामकरोत् ॥ ३ ॥ इतीति ॥ हे नृप मूढः सः इत्येवं प्रतिज्ञाय प्रत्यहं सकृत् एकवारं पांसूनां धुलीनामेकं मुष्टिं ग्रसन् शता आर्षः । देवं पशुपतिं प्रभुं शिवम् आराधयामास ॥ ४ ॥ संवत्सरेति ॥ भगवान् आशुतोषोऽपि उमापतिः शिवः श्रीकृष्णद्विषि वरवैफल्यं मन्वानो नतु शीघ्रं प्रादुरभूत् । ततश्चातिनिर्बन्धनेन शरणमागतं शाल्वं संवत्सरान्ते वरेण

**श्रीशुक उवाच ॥ अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ॥ क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥ शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः ॥ यदुभिर्निर्जितः सङ्ख्ये जरासन्धादयस्तथा ॥२॥ शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम् ॥ अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥ इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम् ॥ आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥ संवत्सरान्ते भगवानाशुतोष उमापतिः ॥ वरेण च्छन्दयामास शाल्वं शरणमागतम् ॥५॥ देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥ अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥ तथेति गिरिशादिष्टो मयः परपुरञ्जयः ॥ पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥ स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ॥ ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥८॥ निरुध्य सेनया शाल्वो महत्या भरतर्षभ ॥ पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः॥९॥सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः॥विहारान्सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः॥शिला द्रुमाश्चाशनयः सर्पा आसारशर्कराः॥१०॥**

च्छन्दयामास वरं वृणीष्वेति प्रेरितवान् । अन्यथा शरणागतोपेक्षादोषः स्यात् ॥ ५ ॥ देवेति ॥ स शाल्वः देवादीनामभेद्यं भेत्तुमशक्यं कामं यथेष्टं गच्छतीति तथाभूतं वृष्णीनां यादवानां भीषणं भयङ्करं नतु घातकं शिवेनान्तःप्रेरणात्तथावरणं यानं विमानं वव्रे वृतवान् । भगवांस्तु देवादिभ्यो भिन्नः अतः सौभं भेत्स्यत्येवेति भावः ॥ ६ ॥ तथेति ॥ तथास्त्वित्यङ्गीकृत्य परेषां शत्रूणां पुराणि जयति तथा सः मुमार्षः गिरिशेनादिष्टो मयो दैत्यः अयस्मयं लोहनिर्मितम् । “ अयस्मयादीनि छन्दसि ” इति भत्वाद्भुत्वाभावः । सौभाख्यं पुरं नगराकारं व्योमगं रथं सौभसंज्ञं निर्माय शाल्वाय प्रादात् ॥ ७ ॥ स इति ॥ स शाल्वः तमसोन्धकारस्य धाम आश्रयम् अत एव अन्यैर्दुरासदं दुष्प्रापं कामगं यानं विमानं लब्ध्वा वृष्णिकृतं वैरं स्मरन्द्वारवतीं ययौ ॥ ८ ॥ निरुद्ध्येति सार्द्धद्वयम् ॥ तत्र बभञ्जेत्यन्तमेकं वाक्यम् । शर्करा इत्यन्तमपरम् ।

हे भरतर्षभ सः शाल्वो महत्या सेनया पुरीं द्वारवतीं निरुध्य उपवनानि फलप्रधानानि उद्यानानि पुष्पप्रधानानि गोपुराणि पुरद्वाराणि तत्सहितानि द्वाराणि प्रासादाः गृहा अट्टालास्तदुपरितना गृहा तोलिकास्तत्पर्यन्तभित्तीः विहारान् क्रीडास्थानानि च सर्वशः सर्वाणि बभञ्ज भङ्क्तुमारब्धवान् किंच विमानाग्र्यात् विमानश्रेष्ठात् तस्मात्सौभात् शस्त्रवृष्टयः शिलादयश्च निपेतुः । आसारो धारासम्पातः शर्कराः सूक्ष्मोपलाः ॥ ९ ॥१० ॥ प्रचण्ड इत्यर्द्धम् ॥ प्रचण्डः निष्ठुरश्चक्रवातोऽभूत् दिशश्च रजसाच्छादिता बभूवुः ॥ ११ ॥ इतीति ॥ हे राजन् इत्येवं सौभेन भृशमर्द्यमाना पीड्यमाना कृष्णस्य नगरी द्वारका शं सुखं नाभ्यपद्यत न प्राप यथा त्रिपुरेण पीड्यमाना मही सुखं न प्राप तद्वत् ॥ १२ ॥ प्रद्युम्न इति ॥ भगवान् भगवदंशः वीरो महायशाश्च प्रद्युम्नस्तदा निजाः प्रजा बाध्यमानाः पीड्यमानाः वीक्ष्य मा भैष्टेत्युक्त्वा रथारूढः सन् युद्धप्रदेशमभ्ययात् अभ्यधादित्यपि पाठः । तत्र युद्धदेशमभ्ययाचेति शेषः । अत्र चक्रवर्ती । युद्धार्थं बलभद्रे निर्जिगमिषति सति वयमेव शाल्वं वधिष्यामस्त्वया तु सुखेनात्रैव स्थेयम्

प्रचण्डश्चक्रवातोऽभूद्रजसाऽऽच्छादिता दिशः ॥ ११ ॥ इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ॥ नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥ प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः ॥ मा भैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥ सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ॥ हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥ अपरे च महेष्वासा रथयूथपयूथपाः ॥ निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥ ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ॥ यथासुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥ ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ॥ क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥ विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ॥ शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥

इत्युक्त्वा साम्बाद्यैः सह प्रद्युम्न एव निर्ययाविति प्राह ॥ १३ ॥ सात्यकिरिति युग्मम् ॥ तथा महान्त इष्वासाः धनूंषि येषां ते रथयूथानि पान्ति ये तेषामपि यूथपाः दंशिताः कवचिताः रथादिभिश्चतुर्भिः सैन्याङ्गैः गुप्ताश्च सात्यकिप्रभृतयोऽपरे निर्ययुः ॥ १४ ॥ १५ ॥ तत इति ॥ ततश्च यथा पूर्वमसुराणां विबुधैः सह युद्धमभूत् तथा तुमुलं व्याकुलं शृण्वतां पश्यतां च रोमहर्षणं रोमोद्गमकरं शाल्वानां शाल्वस्य तदीयानां च यदुभिः सह युद्धं प्रववृते ॥ १६ ॥ ता इति ॥ ताश्च सौभपतेः शाल्वस्य शस्त्रादिवृष्टिरूपाः माया रुक्मिणीसुतः प्रद्युम्नः क्षणमात्रेण दिव्यास्त्रैर्नाशयामास । यथा उष्णगुः सूर्यः नैशं निशायां भवं तमः नाशयति तद्वत् ॥ १७ ॥ विव्याधेति ॥ स्वर्णमयानि पुङ्खानि पृष्ठप्रान्ता येषां तैः अयो लोहं तन्मयानि मुखानि अग्राणि येषां तैः सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां पञ्चविंशत्या शरैः शाल्वस्य ध्वजिनीपालं सेनान्यं

विव्याध ॥ १८ ॥ शतेनेति ॥ शाल्वं तु बाणानां शतेन अताडयत् अस्य शाल्वस्य सैनिकान् भटान् एकैकेन शरेण नेतॄन्सारथीन् दशभिर्दशभिः शरैः वाहनानि गजांश्च रथादीनि त्रिभिस्त्रिभिः शरैरताडयत् ॥ १९ ॥ तदिति ॥ महात्मनः महाशूरस्य प्रद्युम्नस्य तदेकदैवैवं सर्वताडनात्मकं महदतिकौशलयुक्तम् अत एवाद्भुतं कर्म दृष्ट्वा स्वपरसैन्ययोर्वर्तमानाः सर्वे तं प्रद्युम्नं पूजयामासुः प्रशंसितवन्तः ॥ २० ॥ बह्विति ॥ तत् मायामयं मयकृतं सौभं क्वचिद्बहुरूपं क्वचिच्चैकरूपं क्वचिद् दृश्यते क्वचित्तु न दृश्यते एवं परैर्दुर्विभाव्यम् अवितर्क्यमभूत् ॥ २१ ॥ क्वचिदिति ॥ भूम्यादिषु भ्राम्यत् तत्सौभमलातचक्रवत् उल्काभ्रमणवत् दुरवस्थितम् अनवस्थितं चाभूत् ॥ २२ ॥ यत्रेति ॥ सौभेन सहितः सैनिकैः सेनापतिभिश्च सह वर्तमानः शाल्वो यत्र यत्रोपलक्ष्येत उपहीने किञ्चिदपि लक्ष्येत दृश्यते स्म ततस्ततः सात्वतानां यूथपाः मुख्याः शरानमुञ्चन् ॥ २३ ॥ शरैरिति ॥ अग्निवद्दाहकः अर्कवत् युगपत्सर्वतः संस्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेणापि मारकत्वात् दुरासदैः सुदुःसहैः परैः शत्रुभिर्यदुभिरीरितैः

शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान् ॥ दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥ तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः ॥ दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥ २० ॥ बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ॥ मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥ क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ॥ अलातचक्रवद् भ्राम्यत्सौभं तद्दुरवस्थितम् ॥२२॥ यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः ॥ शाल्वस्ततस्ततोऽमुञ्चच्छरान्सात्वतयूथपः ॥ २३ ॥ शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ॥ पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥ २४ ॥ शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ॥ न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥२५॥ शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ॥ आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥ प्रद्युम्नं गदया शीर्णवक्षःस्थलमरिन्दमम् ॥ अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥

प्रयुक्तैः शरैः पीड्यमानं पुरं सौभमनीकानि च यस्य सः शाल्वोऽमुह्यत् ॥ २४ ॥ शाल्वेति ॥ शाल्वस्यानीकपानां सैन्यपानां शस्त्रौघैर्भृशम् अर्दिताः पीडिताः अपि लोकद्वयजिगीषवः विजये सत्कीर्तिर्मरणे च स्वर्गप्राप्तिरिति लोकद्वयजयेच्छवः वृष्णिवीराः यदुवीराः स्वं स्वं रणं रणभूमिं न तत्यजुः ॥ २५ ॥ शाल्वेति ॥ बली शाल्वस्यामात्यो मुख्यमन्त्री नाम्ना द्युमान् प्राक् पूर्वं प्रद्युम्नेन प्रपीडितः अतस्तमासाद्य निकटमागत्य मौर्व्या लोहविशेषनिर्मितया गदया व्याहत्य ताडयित्वा व्यनदत् जितं मयेत्युच्चैः शब्दं कृतवान् । प्रद्युम्नं प्रागित्यत्र प्रद्युम्नादिति पाठे प्रद्युम्नाद्धेतोरित्यर्थः ॥ २६ ॥ प्रद्युम्नमिति ॥ अरिन्दमं शत्रुहन्तारं गदाप्रहारेण शीर्णं भग्नं वक्षस्थलं यस्य तं प्रद्युम्नं रणात् रणस्थानात् धर्मवित् दारुकात्मजः सूतः अपोवाह अपसारयामास । अत्र भगवद्व्यूहावतारस्य प्रद्युम्नस्य प्राकृत्या गदया वक्षोविदारणवर्णनं प्रतीतिमात्रम् । यद्वा । प्रद्युम्नं शीर्णवक्षःस्थलं मत्वेति व्याख्येयम् ॥ २७ ॥

लब्ध्वेति ॥ स प्रथमं तावन् मूर्च्छितस्ततो मुहूर्तेन लब्धा संज्ञा चेतना येन सः कार्ष्णिः प्रद्युम्नः सारथिमब्रवीत् । हे सूत रणात् यन्मे ममापसर्पणं पलायनं तदिदमहो असाधु अत्यसमीचीनं जातम् ॥ २८ ॥ नेति ॥ क्लीबमधृष्टं चित्तं यस्य तेन सूतेन त्वया निमित्तभूतेन प्राप्तं कल्मषम् अपयशो येन तस्मात् मत् मत्तो विना अन्यो यदूनां कुले कोऽपि रणाद्विच्युतः पलायितः न श्रूयते ॥ २९ ॥ किमिति ॥ अतः युद्धात् सम्यगपक्रान्तः प्रसिद्धतया पलायितोऽहं रामकेशवौ पितरौ अभिसंगम्य तत्पार्श्वं गत्वा ताभ्यां पृष्टश्च तत्रात्मनः क्षमं योग्यं किं नु वक्ष्यामि ॥ ३० ॥ व्यक्तमिति ॥ हसन्त्यो मे भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितमेतत्कथयिष्यन्ति हे वीर मृधे युद्धे अन्यैः शत्रुभिस्तव क्लैब्यं व्याकुलत्वं कथं जातं येन त्वं पलायितोऽसि तत्कथ्यताम् ॥ ३१ ॥ धर्ममिति ॥ हे आयुष्मन् हे विभो धर्मं विजानता मया एतत् रणादपसारणं कृतं धर्ममाह सूत इति । कृच्छ्रगतं कष्टं प्राप्तं रथिनं सूतो रक्षेत् तथाविधं सारथिं तु रथी रक्षेत् ॥ ३२ ॥ एतदिति ॥ भवान् परेण शत्रुणा गदया आहतः ताडितः अतः मूर्च्छितः

लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ॥ अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥ न यदूनां कुले जातः श्रूयते रणविच्युतः ॥ विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात्॥ २९ ॥ किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ ॥ युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥ व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः ॥ क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥ सारथिरुवाच ॥ धर्मं विजानताऽऽयुष्मन्कृतमेतन्मया विभो ॥ सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥ एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ॥ उपसृष्टः परेणेति मूर्छितो गदया हतः ॥ ३३ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ श्रीशुक उवाच ॥ स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ॥ नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥ विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ॥ प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥

उपसृष्टः पीडां प्राप्तः इत्येतत् विदित्वैव मया भवान् रणात् अपोवाहितः अपसारितः पकारोत्तर ओकार आर्षः ॥ ३३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे षट्सप्ततितमे व्यधात् ॥ ७६ ॥ सप्तयुक्सप्ततितमे कृष्णेनागत्य चूर्णितम् ॥ सौभं शाल्वश्च निहतस्तत्र श्लोका गजाग्नयः ॥ द्वे उवाचेति सार्द्धैकचत्वारिंशदनुष्टुभः ॥ ७७ ॥ स इति ॥ स तु प्रद्युम्नः सलिलमुपस्पृश्य आचमनं कृत्वा दंशितो बद्धकवचः मध्ये सूतेन कवचोत्तारणात् ततो धृतकार्मुकश्च सन् वीरस्य द्युमतः पार्श्वं मां नयेति सारथिं प्राह स्म ॥ १ ॥ विधमन्तमिति ॥ द्युमत्पार्श्वंनीतो रुक्मिणीसुतः स्वसैन्यानि विधमन्तं क्षपयन्तं द्युमन्तं प्रतिहत्य प्रतिरुध्य स्मयन् हसन् शता आर्षः । अनायासेनैव अष्टभिः शरैः प्रत्यविध्यत् अताडयत् ॥ २ ॥

अष्टानां विनियोगमाह—चतुर्भिरिति ॥ चतुर्भिः शरैः चतुरो वाहान् अश्वान् अहनत् बहुलं छन्दसीति शब्लुगभावः । एकेन शरेण सूतमहनत् द्वाभ्यां शराभ्यां धनुश्च केतुं ध्वजं च चिच्छेद । अन्येनैकेन शरेण तस्य द्युमतः शिरश्चिच्छेद ॥ ३ ॥ गदेति ॥ गदादयो यादवा अपि सौभपतेः शाल्वस्य बलं सैन्यं जघ्नुः संच्छिन्नाः कन्धरा येषां ते सर्वे सौभेयाः सौभस्थाः समुद्रे पेतुः ॥ ४ ॥ एवमिति ॥ एवम् इतरेतरं परस्परं निघ्नतां यदूनां शाल्वानां च संबन्धि त्रिनवरात्रं नवानां रात्रीणां समाहारो नवरात्रं त्रयाणां नवरात्राणां समाहारस्त्रिणवरात्रं सप्तविंशतिरहोरात्राणीत्यर्थः । तुमुलमाकुलमुल्बणं भयंकरं युद्धमभूत् ॥ ५ ॥ अत्र कैश्चिद्दाषिभिरुक्तं विचारयितु मनुवदति—इन्द्रप्रस्थमित्यादिना ॥ एवं वदन्ति राजर्षे इत्यतः प्राक्तनेन ग्रन्थेन धर्मसूनुना युधिष्ठिरेण आहूतः कृष्णः इन्द्रप्रस्थं गतः अथ शिशुपाले संस्थिते मृते सति राजसूये च निर्वृत्ते परिसमाप्ते सति कतिचिद्दिनानि तत्रैव स्थित इति पूर्वोक्तत्वाच्छेषो ज्ञेयः ॥ ६ ॥ कुरुवृद्धानिति युग्मम् ॥ ततश्चातिघोराणि भयसूचकानि निमित्तानि पश्यन् आर्यो बलभद्रस्स एव मिश्रः

चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ॥ द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥ गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ॥ पेतुः समुद्रे सौभेयाः सर्वे सञ्छिन्नकन्धराः ॥ ४ ॥ एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ॥ युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥ इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ॥ राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥ कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम् ॥ निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ ७ ॥ आह चाहमिहायात आर्यमिश्राभिसंगतः ॥ राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥ वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् ॥ सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥९॥ रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ॥ संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥ इत्युक्तश्चोदयामास रथमास्थाय दारुकः ॥ विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥

पूज्यस्तेनाभिसङ्गतः सहितोऽहमिहायातः अतश्चैद्यपक्षीयाः राजन्याः नूनं मम पुरीं हन्युर्नाशयेयुरिति स्वमनस्याह स्म । ततश्च कुलवृद्धान् भीष्मादीन् ससुतां पृथां कुन्तीं मुनींश्चानुज्ञाप्य पृष्ट्वा द्वारवतीं ययौ ॥ ७ ॥ ८ ॥ वीक्ष्येति ॥ तत्रागत्य च स्वानां प्रजानां तच्छाल्वकदनं पीडां वीक्ष्य तथा सौभं शाल्वराजं च वीक्ष्य रामं पुररक्षणं प्रतिनिरूप्य नियुज्य केशवो दारुकं सूतं प्राह स्म । चक्रवर्ती तु एवं चिन्तयन्नेव द्वारकामागत्य तत्र च स्वानां कदनं वीक्ष्य पुराणामन्तःपुरस्थानां श्रीरुक्मिण्यादीनां रक्षणं निरूप्य ताः सर्वाः महिषीः सेनानीद्वारा गुप्तमार्गेण द्वारकावासमध्यं प्रवेश्येत्यर्थः इत्याह ॥ ९ ॥ रथमिति ॥ हे सूत मे रथं शाल्वस्यान्तिकमाशु प्रापय ते तव संभ्रमो भयं न कर्तव्यः यतोऽयं सौभराट् मायावी ॥ १० ॥ इतीति ॥ भगवता इत्युक्तो दारुकः रथमास्थाय अधिष्ठाय अश्वान् चोदयामास गमयामास ततश्च स्वे यादवाः परे शाल्वपक्षीयाश्चरणे प्रविशन्तम् अरुणानुजं ध्वजे वर्तमानं गरुडं ददृशुः ॥ ११ ॥

शाल्व इति ॥ हतप्रायस्य बलस्येश्वरः शाल्वो युद्धे कृष्णमवलोक्य भीमो रवो ध्वनिर्यस्यास्तां शक्तिं कृष्णसूताय प्राहरत् ॥ १२ ॥ तामिति ॥ रंहसा वेगेन आकाशे आपतन्तीं महोल्कामिव सर्वा दिशो भासयन्तीं तां शक्तिं शौरिः श्रीकृष्णः सायकैः आकाश एव शतधा अच्छिनत् ॥ १३ ॥ तमिति ॥ तं च शाल्वं षोडशभिर्बाणैर्विद्ध्वा खे आकाशे भ्रमत् भ्राम्यमाणं सौभं च शरसन्दोहैरविध्यत् यथा सूर्यः खं रश्मिभिर्विध्यति तथा सुनीलत्वविपुलत्वादिभिः सौभस्याकाशोपमा । अचिन्त्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् अयत्नेनैव रश्मिवच्छरजालप्रसारणात् श्रीकृष्णस्य सूर्यसाम्यम् ॥ १४ ॥ शाल्व इति ॥ शाल्वोऽपि शार्ङ्गधन्वनः कृष्णस्य शार्ङ्गसहितं सव्यं वामं दोर्भुजं बिभेद शरेण विव्याध । " दक्षिणं दोर्निशाचर " इति रघुवंशे प्रयोगात् । ककुद्दोषणी इति भाष्यप्रयोगाच्च दोःशब्दस्य क्लैब्यमपि ततस्तस्य हस्तात् शार्ङ्गं धनुर्न्यपतत् अभूतपूर्वत्वात् तत्पतनमद्भुतमाश्चर्यकरमासीत् ॥ १५ ॥ हाहेति ॥ तत्र पश्यतां भूतानां महान् हाहाकारः शब्दः आसीत् तदा सौभराट् शाल्वः उच्चैः विनद्य जनार्दनं

शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ॥ प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥ तामापतन्तीं नभसि महोल्कामिव रंहसा ॥ भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत्॥१३॥तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ॥ अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥ शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ॥ बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥ यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ॥ प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥ तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥ श्रीभगवानुवाच ॥ वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ॥ पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १९ ॥

प्रतीदमाह स्म ॥ १६ ॥ यदिति ॥ हे मूढ यत् यस्मान्नोऽस्माकमीक्षतां पश्यतामेव सतां शता आर्षः । सख्युः शिशुपालस्य भार्या त्वया हृता तथा प्रमत्तः अनवहितः सोऽस्माकं सखा सभामध्ये त्वया व्यापादितः निहतः वस्तुतः हे अमूढ नः सख्युरीक्षमाणस्य सतः अस्माकं चेक्षमाणानांताननादृत्य येन त्वया भार्या स्वजायैव हृता गृहीता तथा प्रमत्तः उन्मत्तचेष्टः स व्यापादितः ॥ १७ ॥ तमिति ॥ तु हेतौ तस्मादात्मानमपराजितम् अपरैरजितोऽहमिति मन्यमानं तं सख्युर्हन्तारं त्वा त्वामद्य निशितैस्तीक्ष्णैर्बाणैरपुनरावृत्तिं मृत्युं नयामि । यदि युद्धे ममाग्रतस्तिष्ठेः स्थास्यसि वस्तुतः अपराजितश्चासौ मानी पूजावांश्च तं नास्ति पुनरावृत्तिर्यस्मात् तं त्वां नयामि प्राप्स्यामि यदि मद्भाग्येनाग्रतः तिष्ठेः ॥ १८ ॥ वृथेति ॥ हे मन्द वृथैव मिथ्यैव त्वं विकत्थसे प्रगल्भं भाषसे अन्तिके समीपे समनन्तरे प्राप्तं स्वमृत्युं न पश्यसि ये शूरास्ते बहुभाषिणः आत्मश्लाघिनो न भवन्ति किंतु इह युद्धे स्वपौरुषमेव दर्शयन्ति ॥ १९ ॥

स्वजनानुषङ्गत इत्युक्तः स्नेहाद्भाष इति स्नेह उक्तः । भयं च पश्यन् निमित्तानि घोराणीत्युक्तं तथा स्वबोध इति ज्ञानविज्ञाने उक्ते । तत्र ज्ञानं बाह्यविषयं विज्ञानं स्वरूपविषयम् ऐश्वर्यं तु महानुभाव इत्युक्तं तथा विरोधः स्पष्ट एव ॥ ३१ ॥ यत्पादेति ॥ यस्य पादसेवयोर्जितया पुष्कलया परिनिष्पन्नया आत्मविद्यया आत्मसाक्षात्कारेण अनादिश्चासावात्मनो विपर्ययो देहेन्द्रियादावहङ्कारलक्षणः स एव दुर्निवार्यत्वात् ग्रहः पिशाचस्तं भक्तजना हिन्वन्ति परित्यजन्ति आत्मीयमनन्तमविनाशि ऐश्वर्यं स्वरूपं च लभन्ते तस्य सतांगतेः फलभूतस्य परमस्य पुरुषोत्तमस्य कुतो नु मोहः स्यात् मोहाभावे च शोकादयो नैव संभवन्ति अतस्तेषां वचनमनन्वितमेव प्रतीयत इत्याशयः ॥३२॥ प्रकृतमनुसरति—तमिति ॥ अमोघः सफलो विक्रमो यस्य सः शौरिः कृष्ण ओजसा बलेन शस्त्रसमूहैः प्रहरन्तं शाल्वं शरैर्विद्ध्वा ताडयित्वा तस्य वर्म कवचं धनुः शिरोमणिं चाच्छिनत् तथा सः कृष्णः शत्रोः शाल्वस्य सौभाख्यं विमानं च गदया रुरोज बभञ्ज ॥ ३३ ॥ तदिति ॥ कृष्णहस्तेनेरितया प्रयुक्तया गदया सहस्रधा विचूर्णितं तत्सौभं

यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ॥ लभन्त आत्मानमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥ तं शस्त्रपूगैः प्रहरन्तमञ्जसा शाल्वं शरैः शौरिरमोघविक्रमः ॥ विद्ध्वाऽच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३ ॥ तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ॥ विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥ आधावतः सगदं तस्य बाहुं भल्लेन छित्त्वाऽथ रथाङ्गमद्भुतम् ॥ वधाय शाल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५ ॥ जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ॥ वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हा हेति वचस्तदा नृणाम् ॥ ३६ ॥ तस्मिन्निपतिते पापे सौभे च गदया हते ॥ नेदुर्दुन्दुभयो राजन्दिवि देवगणेरिताः ॥ सखीनामपचितिं कुर्वन्दन्तवक्त्रो रुषाऽभ्ययात् ॥ ३७ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे शाल्ववधो नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

समुद्रजले पपात ततश्च शाल्वः तत्सौभं विसृज्य त्यक्त्वा भूतलमास्थितः गदामुद्यम्य द्रुतं शीघ्रं यथा भवति तथाच्युतं कृष्णमभ्यगात् ॥ ३४ ॥ आधावत इति ॥ आधावतः अभ्यापततः तस्य शाल्वस्याङ्गदेन सहितं बाहुं भल्लेन बाणविशेषेण छित्त्वाथानन्तरं तस्य वधार्थमद्भुतं लयार्कसंनिभं प्रलयकालिकसूर्यतुल्यं रथाङ्गं चक्रं बिभ्राणः कृष्णो यथा सार्कः सूर्यसहितः उदयाचलो भाति तथा बभौ ॥ ३५ ॥ जहारेति ॥ ततश्च हरिः पुरुमायिनो बहुमायाविदः शाल्वस्य कुण्डलादियुक्तं शिरस्तेनैव चक्रेण जहार । तत्र दृष्टान्तमाह । पुरन्दर इन्द्रो यथा वज्रेण वृत्रस्य शिरो जहार तथेति तदा तत्पश्यतां शाल्वपक्षीयाणां नृणां हा हेति वचो बभूव ॥ ३६ ॥ तस्मिन्निति सार्द्धम् ॥ हे राजन् तस्मिन् पापाचारे शाल्वे निपतिते सति सौभाख्ये पुरे च गदया हते चूर्णिते च सति दिवि स्वर्गे हर्षाद्देवगणैर्वादिता दुन्दुभयो नेदुः सखीनां

७५८वात्सप्तसप्तत ॥ ७७ ॥ अष्टयुक्सप्ततितमे दन्तवक्त्रविदूरथौ ॥ अहन्हरिर्बलः सूतं तत्र श्लोकाः खवार्द्धयः ॥ उवाचपञ्चकं चात्र श्लोकतुल्या अनुष्टुभः ॥ ७८ ॥ शिशुपालस्येति युग्मम् ॥ हे महाराज परलोकगतानां मृतानामपि शिशुपालादीनां परोक्षमेव पारोक्ष्यं स्वार्थे ष्यञ् । तत्र सौहृदं सुहृत्कृत्यं कुर्वन् कर्त्तुं दुर्मतिः एकः पदातिः संक्रुद्धः गदापाणिः पद्भ्यामिमां भूमिं प्रकम्पयन् महासत्वो महाबलः दन्तवक्त्रो व्यदृश्यत ॥ १ ॥ २ ॥ तमिति ॥ तं दन्तवक्त्रं तथा क्रोधेन आयान्तमालोक्य स्वयमपि गदामादाय त्वरया सहितः कृष्णः प्रतियोद्धारं पदातिमालक्ष्य रथादवप्लुत्य प्रत्यधात् प्रतिरुरोध वेलातीरं यथा समुद्रं सर्वतः प्रतिरुणद्धि तथेति ॥ ३ ॥ गदामिति ॥ दुर्मदः कारूषो दन्तवक्त्रोऽपि गदामुद्यम्य मुकुन्दं प्राह स्म । भवानद्य मम दृष्टिपथं गत इति दिष्ट्या दिष्ट्या महानानन्दो जातः । वस्तुतो दुर्मदः गतमदः मुकुन्दं मुक्तिदानायागतं प्राह स्म । जन्मत्रयेऽन्विष्यमाणो ब्रह्मशापावसाने स्वामी दृष्टिपथं गतः ॥ ४ ॥ त्वमिति ॥ हे कृष्ण यद्यपि त्वं नोऽस्माकं शिशुपालादीनां मातुलेयो मातुलपुत्रः अतो

श्रीशुक उवाच ॥ शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः ॥ परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥ १ ॥ एकः पदातिः संक्रुद्धो गदापाणिः प्रकम्पयन् ॥ पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥२॥ तं तथाऽऽयान्तमालोक्य गदामादाय सत्वरः ॥ अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥ ३ ॥ गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः ॥ दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥४॥ त्वं मातुलेयो नः कृष्ण मित्रध्रुङ् मां जिघांससि ॥ अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥ ५ ॥ तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ॥ बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥ एवं रूक्षैस्तुदन् वाक्यैः कृष्णं तोत्रैरिव द्विपम् ॥ गदया ताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥

हननायोग्यः तथापि मित्रं द्रुह्यतीति मित्रध्रुक् शिशुपालं हतवान् मां च यतो जिघांससि अतो हे मन्द वज्रतुल्यया गदया त्वां हनिष्ये वस्तुतः मित्रध्रुक् चासावहं च तं मित्रध्रुङ् मां जिघांससि हन्तुं गन्तुं स्वीकर्त्तुमिच्छसि अतः हे अमन्द गदया त्वदीयया कौमोदक्या हेतुना त्वां हनिष्ये प्राप्स्यामि ॥ ५ ॥ तर्हीति ॥ हे अज्ञ तर्हि त्वद्वधे कृते यथा देहचरं व्याधिं विनाश्य सुखमाप्नोति एवं मित्रवत्सलोऽहं बन्धुरूपमरिं त्वां हत्वा मित्राणां शिशुपालादीनामानृण्यम् नृणराहित्यमुपैमि प्राप्स्यामि । वस्तुतः नास्ति ज्ञो यस्मात् हे सर्वज्ञ ब्रह्मशापादरिं शत्रुत्वेन भातं विगत आधिर्येन तं देहचरमन्तर्यामिणं त्वां यथा यथावद् हत्वा ज्ञात्वा मित्राणां तदुपलक्षितपित्रादीनां चानृण्यमुपैमि देवर्षिभूतात्तनृणां पितॄणाञ्च किङ्करो नायमृणी चेत्युक्तेः ॥ ६ ॥ एवमिति ॥ स दन्तवक्त्रः तोत्रैरङ्कुशादिभिः द्विपं गजमिव एवं रूक्षैः प्रातीतिकार्थेन परुषैर्वाक्यैः कृष्णं तुदन् व्यथयन् मूर्ध्नि गदया अताडयत् ततः सिंहवद्व्यनदच्च ॥ ७ ॥

गदयेति ॥ यदूनुद्वहति पालयतीति तथाभूतः कृष्णः आजौ युद्धे एवं गदयाभिहतोऽपि न चचाल किंतु गुर्व्या कौमोदक्या स्वगदया तमपि स्तनान्तरे अहन् ॥ ८ ॥ गदेति ॥ एवं गदया निर्भिन्नं हृदयं यस्य सः अत एव व्यसुः गतप्राणः मुखात् रुधिरमुद्वमन् केशादीन् प्रसार्य धरण्यां न्यपतत् ॥ ९ ॥ तत इति ॥ हे नृप सर्वभूतानां पश्यतामेव अद्भुतम् अदृष्टपूर्वत्वात् आश्चर्यकरं सूक्ष्मतरं ज्योतिः जीवाख्यं तेजः ततो दन्तवक्त्रशरीरात् निःसृत्य कृष्णमाविशत् । यथेति यथा चैद्यवधे कृते सति तद्देहाज्ज्योतिः निःसृत्य कृष्णमाविशत् तथेत्यर्थः । यद्यप्यतिसूक्ष्मत्वादात्मज्योतिर्द्रष्टुमशक्यं तथापि लोकविश्वासार्थं भगवानचिन्त्यशक्तिस्तथाऽदर्शयत् ॥ १० ॥ विदूरथ इति ॥ ततश्च तस्य दन्तवक्त्रस्य भ्राता विदूरथः भ्रातृविषयकशोकेन परिप्लुतो व्याप्तोऽतस्तस्य कृष्णस्य जिघांसया वस्तुतः प्राप्तीच्छया असिचर्मभ्यां खड्गखेटाभ्यां युक्त उच्छ्वसन्नागच्छत् ॥ ११ ॥ तस्येति ॥ हे राजेन्द्र आपततस्तस्य विदूरथस्य किरीटादिसहितं शिरः क्षुरस्येव नेमिर्धारा यस्य तेन चक्रेण कृष्णो जहार चिच्छेद ॥ १२ ॥

गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ॥ कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनान्तरे ॥ ८ ॥ गदानिर्भिन्नहृदय उद्वमन्रुधिरं मुखात् ॥ प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतद्व्यसुः ॥ ९ ॥ ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ॥ पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥१०॥ विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ॥ आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥११॥ तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ॥ शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ १२ ॥ एवं सौभं च शाल्वं च दन्तवक्त्रं सहानुजम् ॥ हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥ १३ ॥ मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥१४॥ उपगीयमानविजयः कुसुमैरभिवर्षितः ॥ वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम् ॥ १५ ॥ एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ॥ ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १६ ॥

एवमिति त्रयम् ॥ अन्यैर्दुर्विषहान् सोढुमशक्यानपि शाल्वादीन् एवमनायासेनैव हत्वा सुरादिभिरीडितः उपगीयमानविजयः कुसुमैरभिवर्षितः आच्छादितः वृष्णिप्रवरैः शाल्वयुद्धार्थमागतैः प्रद्युम्नादिभिस्तद्वधोत्तरमागतैरुग्रसेनाद्यैश्च वृतः श्रीकृष्णः अलङ्कृतां पुरीं द्वारकां विवेश ॥ १३ ॥ १४ ॥ १५ ॥ एवमिति ॥ एवं योगेश्वरः भगवान् जगदीश्वरः कृष्णः एवमनायासेन महाबलानपि सर्वदा जयत्येव । इतिशब्दोऽवधारणे । पशुदृष्टीनामविवेकिनां तु सः कदाचिज्जरासन्धादिभिः निर्जितोऽपि ईयते प्रतीयते इति पूतनादिविदूरथान्तमामथ्य कृष्णो युद्धादुपरतोऽभूत् इत्याहुः । अत्र तोषण्यां पाद्मोत्तरखण्डोक्तो विशेषः । तथा हि तत्रत्यगद्यानि यथा । अथ शिशुपालं हतं श्रुत्वा दन्तवक्त्रः कृष्णेन योद्धुं मथुरामाजगाम । कृष्णस्तु तच्छ्रुत्वा रथमारुह्य मथुरामाययावित्यादि ततोऽत्रैवं व्याख्येयम् । पौण्ड्रकशिशुपालौ हतौ श्रुत्वा श्रीकृष्णं योद्धुं दन्तवक्त्रः शक्रप्रस्थं प्रति चलितः मार्गे नारदेन द्वारकागतं कृष्णकृतशाल्ववधं बोधितः कृष्णेन गदायुद्धं चिकीर्षुर्मथुरामुपद्रावयितुं तत्रैव तदाह्वानेच्छया ययौ । तच्छ्रुत्वा भगवाने-

काकी मथुरां रथेन गत्वा तं सानुजं हतवान् । ततः नन्दव्रजं गत्वा पितरावभिवाद्य कालिन्द्यां गोपीभिः रेमे । इदं व्रजगमनं भागवतसंमतमेव। आयास्य इति दौत्यकैरित्यादि प्रतिज्ञानात् । " कुरून्मधून्वाथ सुहृद्दिदृक्षया " इति प्रथमस्कन्धोक्तेः । मधून् मथुरासुहृदो व्रजस्थान् वेति स्वामिव्याख्यानाच्च सूर्योपरागयात्रायां गतांश्चिरायिता-नित्यादिवाक्यविरोधस्तु नास्ति । तद्यात्रायाः दन्तवक्रवधपूर्वकालिकत्वात् । तत्रैवं क्रमः कंसवधोत्तरं नरकवधान्तलीलाल्पैरेव वत्सरैः ततः सूर्योपरागयात्रा ततो राजसूयसभा ततः पाण्डवानां द्यूतवनगमने तदैवेतः शाल्वदन्तवक्रवधव्रजगमनानि तेषु रामतीर्थयात्रादिकम् । सूर्योपरागे भीष्माद्यागमोक्त्या रामतीर्थयात्रोत्तरत्वासंभवात् । ततश्च दन्तवक्रादिवधोत्तरं मासद्वयं व्रजे स्थित्वा नन्दगोपादिभ्यः परमं स्वपदं दत्त्वा पश्चाद्द्वारवतीमाजगामेति तत्रोक्तम् । अत्र वाक्यान्तरविरोधसमाधानं तोषण्यां द्रष्टव्यम् ॥ १६ ॥ श्रुत्वेति ॥ कुरूणां पाण्डवैः सह युद्धोद्यमं श्रुत्वा मध्यस्थः एकतरपक्षावलम्बत्यागी रामस्तीर्थस्नानव्याजेन प्रययौ द्वारकातो निर्जगाम ॥ १७ ॥ स्नात्वेति ॥ प्रभासे स्नात्वा तत्र तर्पणब्राह्मणभोजनादिना देवादीन्सन्तर्प्य प्रतिस्रोतं प्रतिलोमं प्रवाहसंमुखं यथा भवति तथा सरस्वतीं तत्तीरं ब्राह्मणसंवृतो ययौ ॥ १८ ॥ पृथूदकमिति ॥

श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः ॥ तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥ स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ॥ सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥ पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ॥ विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥ यमुनामनु यान्येव गङ्गामनु च भारत ॥ जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥ तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ॥ अभिवन्द्य यथान्यायं प्रणम्योत्थाय चाऽऽर्चयन् ॥ २१ ॥ सोऽर्चितः सपरीवारः कृतासनपरिग्रहः ॥ रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥२२॥ अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ॥ अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥

पृथूदकादीन् तीर्थविशेषान् ययावित्यन्वयः । पृथूदकं यत्र पृथुनाऽश्वमेधशतेनेष्टं तत्कुरुक्षेत्रवर्ति बिन्दुसरः कर्दमाश्रमं गुर्जरदेशे त्रितकूपं सरस्वत्यन्तर्वर्तित्रितमहर्षेस्तीर्थं सुदर्शनतीर्थमपि तत्रैव। विशालं सरस्वत्यन्तर्वर्ति तीर्थं विशालामिति पाठे अवन्तीं ब्रह्मतीर्थं चक्रतीर्थं सरस्वत्यामेव प्राची सरस्वती कुरुक्षेत्रवर्तिनी इदं तीर्थसङ्ग्रहमात्रं ननु मार्गक्रमः ॥ १९ ॥ यमुनामिति ॥ यमुनामनु यमुनातीरे यानि तीर्थानि तथा हे भारत गङ्गामनु यानि तीर्थानि तानि गत्वा ततो यत्र ऋषयः शौनकादयः सत्रमासते अनुतिष्ठन्ति तन्नैमिषारण्यमाजगाम ॥ २० ॥ तमिति ॥ तं बलभद्रमागतमभिप्रेत्य ज्ञात्वा दीर्घं सहस्रसंवत्सरपर्यन्तमनुष्ठेयं सत्रं येषामस्ति ते मुनयः उत्थायाभिनन्द्य सुष्ठु आगमनं जातमिति वचसा अभिनन्दनं कृत्वा शिरसा प्रणम्य च यथान्यायं यथोचितम् आर्चयन् पूजितवन्तः ॥ २१ ॥ स इति ॥ सपरीवारः सहचरविप्रादिसहितोऽर्चितः कृत आसनपरिग्रहो येन स रामः महर्षेर्व्यासस्य शिष्यं रोमहर्षणमासीनमैक्षत ॥ २२ ॥ अप्रतीति ॥ माधवः बलदेवः सूतं प्रति लोमजं ब्राह्मण्यां क्षत्रियाज्जातं तान् विप्रान्-

ध्यासीनं तेभ्यो विशेष्योऽप्युच्चासनासीनं स्वं प्रति अप्रत्युत्थायिनं प्रत्युत्थानमकृतवन्तम् अकृतप्रह्वणाञ्जलिं न कृतं प्रह्वणं प्रह्ववदाचरणं प्रणामोऽञ्जलिश्च येन प्रह्वशब्दादाचारक्विबन्ताल्ल्युट् । तादृशमुद्वीक्ष्य चुकोप कोपपूर्वकमाह स्म ॥ २३ ॥ कस्मादिति ॥ प्रतिलोमजः दुर्मतिः असौ सूतः इमान् धर्मपालान् विप्रान् अस्मांश्च कस्मात् अध्यास्ते उच्चैरासनमधितिष्ठति अतोऽयं वधमर्हति ॥ २४ ॥ न चेदमज्ञानादित्याह—ऋषेरिति ॥ भगवतो वेदव्यासस्य शिष्यो भूत्वा वेदेऽधिकाराभावात् इतिहाससहितानि पुराणानि बहून्यधीत्य तथा सर्वशः कार्त्स्न्येन धर्मशास्त्राणि चाधीत्याप्येवमध्यास्ते ॥ २५ ॥ अदान्तस्येति ॥ अदान्तस्य अविनीतस्य वृथापण्डितमानिनः अजितात्मनः अजितचित्तस्य अस्य तानीतिहासादीनि गुणाय तात्पर्यज्ञानाय उपशमफलाय वा न भवन्ति स्म । यथा नटेन मायाविना यथा परप्ररोचनार्थं प्रदर्शिता अपि राजविभवाः स्वभोगसुखजनका न भवन्ति तथाऽवशीकृतान्तःकरणेन गृहीतान्युपदिष्टान्यपि शास्त्राणि स्वफलप्रदानि नैव भवन्ति ॥ २६ ॥ एतदिति ॥ हि यस्मात् अस्मिंल्लोके मया

कस्मादसाविमान्विप्रानध्याऽऽस्ते प्रतिलोमजः ॥ धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४ ॥ ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ॥ सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥ अदान्तस्याविनीतस्य वृथा पण्डितमानिनः ॥ न गुणाय भवन्ति स्म नटस्येवाऽजितात्मनः ॥ २६ ॥ एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ॥ वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ २७ ॥ एतावदुक्त्वा भगवान् निवृत्तोऽसद्वधादपि ॥ भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥ २८ ॥ हा हेति वादिनः सर्वे मुनयः खिन्नमानसाः ॥ ऊचुः संकर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥ अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दनः ॥ आयुश्चात्माऽक्लमं तावद्यावत्सत्रं समाप्यते ॥ अजानतैवाचरितस्त्वया ब्रह्मवधो यथा ॥ ३० ॥

एतदर्थः दुष्टवधार्थ एवावतारः कृतः अतो धर्मध्वजिनः बहिर्धर्मप्रकाशकाः अपि अन्तः पापिनः ते मम वध्याः । हि यस्मात्ते अधिकाः पापिनः अधर्मिष्ठा हि स्वयमेव नरके पतन्ति । धर्मध्वजिनस्तु अन्यानपि पातयन्ति ॥ २७ ॥ एतावदिति ॥ तीर्थयात्राकारितया असतां वधान्निवृत्तोऽपि भगवान् प्रभुः रामः एतावदुक्त्वा भावित्वाद्भवितव्यस्य केनाप्यपरिहार्यत्वात्तं रोमहर्षणं करस्थेन कुशाग्रेण अहनत् अहन् । " बहुलं छन्दसि " इति शब्लुगभावः ॥ २८ ॥ हा हेति ॥ तदा खिन्नमानसाः हा हेति वादिनः सर्वे मुनयः सङ्कर्षणं देवम् ऊचुः । हे प्रभो एतद्वधरूपः अधर्मः ते त्वया कृतः वस्तुतो नास्ति धर्मो यस्मात्स परमधर्म इत्यर्थः ॥ २९ ॥ अस्येति सार्द्धम् ॥ हे यदुनन्दन यावता कालेन एतत्सत्रं समाप्यते तावत्कालमस्माभिरस्य रोमहर्षणस्य ब्रह्मासनं दत्तम् अतोऽस्याप्रत्युत्थानं युक्तमेवेति सूचितम् तथात्मनो देहस्य न क्लमः श्रमो यस्मिंस्तथाभूतमायुश्च दत्तम् । अत एतत्सर्वमजानतेव त्वया यथा ब्राह्मणवधः क्रियेत तथास्य वध आचारितः कृतः इवशब्देन तव अज्ञातमपि नास्तीति सूच्यते ॥ ३० ॥

योगेश्वरस्येति सार्द्धम् ॥ हे लोकपावन आम्नायो ब्राह्मणो न हन्तव्य इत्यादिश्रुतिस्मृत्यात्मको भवतो यद्यपि नियामको नास्ति तथापि यदि अनन्यचोदितः स्वयमेव एतस्या ब्रह्महत्यायाः पावनं प्रायश्चित्तं भवांश्चरिष्यति तदा लोकसङ्ग्रहो लोकानां प्रायश्चित्ते प्रवृत्तिर्भविष्यति नान्यथा । " यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ " इति वचनात् ॥३१॥ करिष्ये इति ॥ लोकानुग्रहकाम्यया लोकसंग्रहेच्छयाऽहमेतस्य वधस्य निर्वेशं प्रायश्चित्तं करिष्ये करिष्यामि अतः प्रथमे कल्पे मुख्ये पक्षे यावान्नियमः प्रायश्चित्तं स तु स एवमया विधीयतां करणीयः ॥३२॥ दीर्घमिति ॥ बत तथा एतस्य रोमहर्षणस्य दीर्घमायुः सत्वं बलम् इन्द्रियं इन्द्रियपाटवम् अन्यच्च यद्भवतामाशासितमपेक्षितं तत्सर्वं ब्रूत । अहं योगमायया अचिन्त्यशक्त्या तत्सर्वं साधये सम्पादयिष्यामि ॥ ३३ ॥ अस्त्रस्येति ॥ अस्त्रस्य त्वत्प्रयुक्तस्य कुशस्य तव च वीर्यस्य प्रभावस्य मृत्यो रोमहर्षणमरणस्य च यथा सत्यता स्यात् तथा अस्माकं वचः यावत्सत्रं त्वं दीर्घायुः पुराणवक्ता च भवेत्येवंविधं च यथा सत्यं

योगेश्वरस्य भवतो नाम्ना योऽपि नियामकः ॥ यद्येतद्ब्रह्महत्यायाः पावनं लोकपावनः ॥ चरिष्यति भवांल्लोकसङ्ग्रहोऽनन्यचोदितः ॥ ३१ ॥
॥ श्रीभगवानुवाच ॥ करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ॥ नियमः प्रथमे कल्पे यावान्स तु विधीयताम् ॥३२॥ दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च ॥ आशासितं यत्तद्ब्रूत साधये योगमायया ॥ ३३ ॥ ऋषय ऊचुः ॥ अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ॥ यथा भवेद्वचः सत्यं तथा राम विधीयताम् ॥ ३४ ॥ श्रीभगवानुवाच ॥ आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ॥ तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान् ॥ ३५ ॥ किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ॥ अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥ ३६ ॥ ऋषय ऊचुः ॥ इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ॥ स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥ ३७ ॥

भवेत्तथा हे राम विधीयतां क्रियताम् ॥ ३४ ॥ आत्मेति ॥ "आत्मा वै पुत्रनामासि, संजीव शरदः शतम् " इत्यादिवेदानुशासनं वेदवाक्यमस्ति तस्मादस्य रोमहर्षणस्य पुत्र उग्रश्रवा भवतां पुराणवक्ता भवेत् आयुरादिमांश्च भवेत् अतः साक्षाद्रोमहर्षणस्याजीवनादस्त्रस्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादेः सिद्धेर्भवद्वचनस्यापि सत्यता स्यात् ॥३५॥ किमिति ॥ हे मुनिश्रेष्ठाः सूतवधखेदोपशमनाय मया यूयं प्रसाद्याः प्रायश्चित्तोपदेष्टृभ्यः प्रथमं किंचिद्देयं वा तत्र वो युष्माकं किंविषयकः कामः संकल्पो वर्तते तद्ब्रूत । अहं तत् अथ अनन्तरमेव करवाणि ततस्तु अपचितिं सूतहत्या प्रायश्चित्तमजानतो मे मदर्थं हे बुधाः सर्वज्ञाः यथावत्प्रायश्चित्तं चिन्त्यतां विचार्य कथ्यताम् ॥ ३६ ॥ इल्वलस्येति ॥ इल्वलस्य सुतो बल्वलो नाम दानवोऽस्ति स पर्वणि पर्वणि पूर्णमास्यां पूर्णमास्याम् अमायाममायां च एत्य आगत्य नोऽस्माकं सत्रसंज्ञकं यागं दूषयति । स

च घोरो भयङ्करोऽस्मदसाध्यः ॥ ३७ ॥ तमिति ॥ हे दाशार्ह पूयादीनभितो वर्षति तादृशं तं पापाचारं जहि मारय तद्धननमेव नोऽस्माकं परमुत्कृष्टं शुश्रूषणं सेवनम् ॥ ३८ ॥ ततश्चेति ॥ बल्वलवधानन्तरं सुसमाहितः सन् द्वादशमासान् द्वादशानिति चित्सुखपाठः । भारतं वर्षं परीत्य सर्वत्र भ्रमणं कृत्वा तीर्थस्नायी तत्र तत्र तीर्थस्नानशीलः कृच्छ्राणि चरित्वा विशुद्ध्यसे शुद्धकीर्तिर्भविष्यसि वस्तुतस्तु अन्तर्भूतण्यर्थे लोकान् शोधयिष्यसि शुद्धयशसा पादयिष्यसि तङ्गार्थः । सुसमाधानादिगुणविशेषादेकाब्दमात्रमुक्तमिति स्वामिपादाः । तेन स्मृत्युक्तद्वादशाब्दिकविरोधाभावः । स विंशतिशतयोजनागतस्य भागीरथीस्नानं द्वादश वर्षकृच्छ्रसममित्यादिस्मृतिरीत्या तु बुद्धिपूर्वकब्रह्महत्याप्रायश्चित्ततोऽप्यधिकं कृतमिति ज्ञेयम् । नाप्यसौ सूतः साक्षाद् ब्राह्मणः ॥ ३९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो निरमादशमस्याष्टसप्तते ॥ ७८ ॥ ऊनाशीतितमे रामो न्यहन्बल्वलदानवम् ॥ तीर्थस्नानैः सूतहत्यां श्लोकाः सार्द्धाश्चतुर्गुणाः ॥ उवाचेत्येकमेवात्र

तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ॥ पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ ३८ ॥ ततश्च भारतं वर्षं परीत्य सुसमाहितः ॥ चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे ॥ ३९ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे बलदेवचरित्रे बल्वलवधोपक्रमो नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ श्रीशुक उवाच ॥ ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगन्धस्तु सर्वशः ॥ १ ॥ ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ॥ अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥२॥ तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥ सस्मार मुसलं रामः परसैन्यविदारणम् ॥ हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥ तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ॥ मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥

श्लोकैस्तुल्या अनुष्टुभः ॥ ७९ ॥ तत इति ॥ एवमृषिभिरुक्तमङ्गीकृत्य रामः तदागमनं प्रतीक्षमाणस्तिष्ठति ततस्तदन्तरं हे राजन् पर्वणि उपावृत्ते प्राप्ते सति प्रचण्डो निष्ठुरः पांसून् वर्षतीति तथा भीमो भयङ्करः पूयगन्धः दुर्गन्धो वायुः सर्वतोऽभूत् ॥ १ ॥ तत इति ॥ ततश्च बल्वलेन विनिर्मितममेध्यमयं विण्मूत्रादिमयं वर्षं यज्ञशालायामभवत् । ततश्च शूलधृक् धृजेः क्विप् स बल्वलोऽन्वदृश्यत दृष्टो बभूव ॥ २ ॥ तमिति युग्मम् ॥ बृहत्कायः शरीरं यस्य तं भिन्नो विदीर्णः अञ्जनचय उपमासदृशो यस्य तमतिकृष्णमित्यर्थः । तप्तताम्रवत् शिखाः श्मश्रूणि च यस्य तं दंष्ट्राभिः उग्राभ्यां भ्रुकुटीभ्यां च युक्तं मुखं यस्य तं बल्वलं विलोक्य रामः परसैन्यं विदारयतीति तथा तत् मुसलं तथा दैत्यान् दमयति विनाशयतीति तथाभूतं हलं च सस्मार । तेच हलमुसले तूर्णं तत्क्षणमेवोपतस्थतुः समीपमाजग्मतुः ॥ ३ ॥४ ॥ तमिति॥ब्रह्मद्रुहं ब्राह्मणद्रोहकर्तारं गगनेचरम् आकाशे स्थितं तं बल्वलं हलाग्रेणाकृष्य क्रुद्धो बलः मुसलेन मूर्ध्नि अहनत् शब्लुगभाव आर्षः ॥ ५ ॥

स इति ॥ निर्भिन्नं ललाटं यस्य सः बल्वलः असृक् रुधिरं समुत्सृजन् उद्वमन् अतो रुधिरेणारुणः आर्तस्वरं च मुञ्चन् भुवि अपतत् । यथा गैरिकादिभिररुणः इन्द्रवज्रेण हतः शैलः स्वरं शब्दं मुञ्चन् पतति तथेति ॥ ६ ॥ संस्तुत्येति ॥ महाभागा मुनयो रामं संस्तुत्य अवितथाः यथार्थाः आशिषः प्रयुज्य अभ्यषिञ्चन् स्नापयामासुः । यथा वृत्रघ्नमिन्द्रं वृत्रवधेन संतुष्टा विबुधाः अभिषिच्य स्तुत्यादिकं कृतवन्तस्तथेति ॥ ७ ॥ वैजयन्तीमिति ॥ श्रियः शोभाया धामानि अम्लानानि पङ्कजानि यस्यां तां वैजयन्तीं बहुरूपपुष्परचितां मालां दिव्ये वाससी वस्त्रे दिव्यान्याभरणानि च रामाय ददुः ॥ ८ ॥ अथेति ॥ बल्वलवधानन्तरं तैर्मुनिभिरभ्यनुज्ञातो रामो ब्राह्मणैः सह कौशिकीं नदीमेत्य आगत्य तत्र स्नात्वा ततः सरोवरमगात् । यतः सरसः सरयुर्नाम नदी हस्वान्ततार्षी । आस्रवत् उदगात् ॥९॥ अन्विति ॥ स बलभद्रः सरयूमनुस्रोतेन अनुलोमेन

सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ॥ मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥ ६ ॥ संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ॥ अभ्यषिञ्चन्महाभागा वृत्रघ्नं विबुधा यथा ॥ ७ ॥ वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ॥ रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥ अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ॥ स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ॥ स्नात्वा संतर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ १० ॥ गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ॥ गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसंगमे ॥ ११ ॥ उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ॥ सप्तगोदावरीं वेणां पम्पां भीमरथीं गतः ॥ १२ ॥ स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ॥ द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः ॥ १३ ॥ कामकोष्णीं पुरीं काञ्चीं कावेरीं च सरिद्वराम् ॥ श्रीरङ्गाख्यं महापुण्यं यत्र संनिहितो हरिः ॥ १४ ॥ ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ॥ सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५ ॥

प्रयागमुपगम्य तत्र स्नात्वा देवादीन् संतर्प्य पुलहाश्रमं शालग्रामक्षेत्रं हरिक्षेत्रं वा जगाम ॥ १० ॥ गोमतीमिति ॥ क्त्वान्तानां सेतुमगमदित्यनेनान्वयः । गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणाख्ये नदे आप्लुतः ततश्च गयां गत्वा तत्र पितॄन् इष्ट्वा जीवत्पितृपितामहकत्वेन श्राद्धाधिकाराभावाद्ब्राह्मणभोजनदानादिना समाराध्य । यद्वा । प्रपितामहादिपितृश्राद्धानि कृत्वा "वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥" इति स्मृतेः । एतदपि वसुदेवाज्ञयैवेति ज्ञेयम् । ततो गङ्गासागरसङ्गमे उपस्पृश्य आचमनपूर्वं स्नात्वा रामं परशुरामं सप्तगोदावरं सप्तधात्मानं यत्र गोदावरी कृत्वा समुद्रं गता तत्तीर्थं सप्तगोदावरमिति पाठः । ङचन्तपाठस्त्वार्षः । वेणाभीमरथ्यौ नद्यौ पम्पाख्यं सरः श्रीशैलाख्यं पर्वतं गिरिशस्य रुद्रस्यालयं श्रीरङ्गाख्यं क्षेत्रं स्पष्टं शेषम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

तत्रेति युग्मम् ॥ तत्र सामुद्रसेतौ ततः कृतमालां ताम्रपर्णीं नदीं मलयं चागमदित्यनुषङ्गः । तत्र मलये ॥ १६ ॥ १७ ॥ दक्षिणमिति सार्द्धम् ॥ दक्षिणमर्णवं गतः सः रामस्तत्रार्णवसमीपे कन्याख्यां दुर्गां देवीं ददर्श । ततः फाल्गुनमनन्तपुरमासाद्य यत्र विष्णुः सदा सन्निहितो वर्तते तत उत्तमं तीर्थं पञ्चाप्सरसं नाम सरः आसाद्य तत्र स्नात्वा गवामयुतमस्पर्शयत् ब्राह्मणेभ्यो ददौ आर्षः ॥ १८ ॥ तत इति ॥ ततो भगवान् रामः केरलादीन् देशानभिव्रज्य यत्र धूर्जटेः शिवस्य सान्निध्यमस्ति तद्गोकर्णाख्यं शिवक्षेत्रमगमदिति शेषः ॥१९॥ आर्यामिति युग्मम् ॥ द्वीपमयनं यस्यास्तामार्यां देवीं दृष्ट्वा बलः सूर्पारकाख्यं क्षेत्रमगात् । ताप्यादीर्नदीः उपस्पृश्य तासु स्नात्वा अथ दण्डकारण्यं प्रविश्य रेवां नर्मदां नदीमगमत् । यत्र रेवातीरे माहिष्मती पुरी वर्तते मनुतीर्थं ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वतीति चतुर्थीकमुपस्पृश्य स्नात्वा पुनः प्रभासमागमत्

तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ॥ कृतमालां ताम्रपर्णीं मलयं च कुलाचलम् ॥ १६ ॥ तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ॥ योजितस्तेन चाशीर्भिरनुज्ञातो गतोर्णवम् ॥ १७ ॥ दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् ॥ विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १८ ॥ ततोऽभिव्रज्य भगवान्केरलांस्तु त्रिगर्तकान् ॥ गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥ आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः ॥ तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥ २० ॥ प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥ मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥ श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे ॥ सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ २२ ॥ स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे ॥ वारयिष्यन्विनशनं जगाम यदुनन्दनः ॥ २३ ॥ युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥ गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ॥ मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २५ ॥ युवां तुल्यबलौ वीरौ हे राजन्हे वृकोदर ॥ एकं प्राणाधिकं मन्ये उतैकं शिक्षयाधिकम् ॥ २६ ॥

॥ २० ॥ २१ ॥ श्रुत्वेति ॥ तत्र प्रभासे द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे सर्वेषां बहूनां तत्रागतानां राज्ञां निधनं नाशं श्रुत्वा भगवता भुवो भारं हृतं मेने ॥ २२ ॥ स इति ॥ तदा यदुनन्दनः स रामः मृधे गदाभ्यां युध्यतोः शतार्षः । भीमदुर्योधनयोः शेषे षष्ठी । भीमदुर्योधनौ वारयिष्यन् वारयितुं विनशनं कुरुक्षेत्रं जगाम । । यद्वा भीमदुर्योधनयोः विनशनं युद्धं वारयिष्यन् तत्र जगामेत्यन्वयः ॥ २३ ॥ युधिष्ठिर इति ॥ युधिष्ठिरः कृष्णार्जुनौ यमौ नकुलसहदेवौ च तं रामं दृष्ट्वाभिवाद्य किं विवक्षुरिहागत इति संशयमापन्ना भीतास्तूष्णीमभवन् ॥ २४ ॥ गदेति ॥ संरब्धौ क्रुद्धौ अतो नमस्कारमकृतवन्तौ विजयैषिणौ अतो गदापाणी विचित्राणि मण्डलानि गदाप्रहारगतिभेदांश्चरन्तावुक्तौ भीमदुर्योधनौ दृष्ट्वा इदं वक्ष्यमाणमब्रवीत् ॥ २५ ॥ युवामिति ॥ हे राजन् दुर्योधन हे वृकोदर भीम युवां तुल्यबलौ वीरौ च तत्र एकं भीमं दुर्योधनात् प्राणेन बलेना-

धिकं मन्ये उत अथ चैकं दुर्योधनं भीमात् शिक्षयमया कृतया गदाप्रहारनैपुण्येनाधिकं मन्ये ॥ २६ ॥ तस्मादिति ॥ यस्मादेवं तस्मात् समवीर्ययोर्युवयोरन्यतरस्येह युद्धे जयः अन्यः पराजयो वा भविष्यतीति न लक्ष्यते अतो निष्फलोऽयं रणः युद्धं विरमतु ॥ २७॥ नेति ॥ हे नृप यद्यपि तस्य रामस्य वाक्यम् अर्थवत् क्लेशनिवर्तकं तथापि बद्धवैरौ अन्योन्यं दुरुक्तं दुष्कृतानि च स्मरन्तौ तौ न जगृहतुः ॥ २८ ॥ दिष्टमिति ॥ तत्स्ववाक्याग्रहणं दिष्टं तयोरनिष्टहेतुप्राचीनकर्मप्रयुक्तं मन्वानो रामो द्वारवतीं ययौ । तत्र चोग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः संमिलितो बभूव ॥ २९ ॥ तमिति ॥ एवं तीर्थस्नानादिभिर्निवृत्तोऽखिलो विग्रहः कलहः तत्प्रयुक्तो दोषो यस्य तं क्रत्वङ्गं यज्ञमूर्तिं पुनर्नैमिषं प्राप्तं रामम् ऋषयो मुदा हर्षेण सर्वैः क्रतुभिरयाजयन् ॥ ३० ॥ तेभ्य इति ॥ भगवान् विभुः बलदेवः दक्षिणाज्ञानसंदेश इति वाक्यात् तेभ्यः ऋषिभ्यो दक्षिणात्वेन विशुद्धं संशयविपर्ययादिरहितं विज्ञानं व्यतरत् ददौ । येनैव ज्ञानेन आत्मनि अदो विश्वं विदुः तथा विश्वं गच्छति व्याप्य तिष्ठतीति तथाभूतमात्मानं च विदुः

तस्मादेकतरस्येह युवयोः समवीर्ययोः ॥ न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २७ ॥ न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ॥ अनुस्मरन्तावन्योन्यं दुरुक्तं दुष्कृतानि च ॥ २८ ॥ दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ॥ उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतः ॥ २९ ॥ तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन्मुदा ॥ क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥३०॥ तेभ्यो विशुद्धविज्ञानं भगवान्व्यतरद्विभुः ॥ येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥ स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ॥ रेजे स्वज्योत्स्नयेवेन्दुः सुवासाः सुष्ठ्वलंकृतः ॥ ३२ ॥ ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः ॥ अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥ ३३ ॥ योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ॥ सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत् ॥३४॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्धे एकोनाशीतितमोऽध्यायः ॥७९॥ राजोवाच ॥ भगवन्यानि चान्यानि मुकुन्दस्य महात्मनः ॥ वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥ १ ॥

साक्षात्कुर्युः ॥३१॥ स्वेति ॥ स्वपत्न्या रेवत्या सह अवभृथस्नातः कृतावभृथाख्यस्नानः सुवासाः सुष्ठु अलंकृतः ज्ञात्यादिभिर्वृतश्च रामः स्वज्योत्स्नया चन्द्र इव रेजे ॥३२॥ ईदृगिति ॥ बलेन शालते शोभते तस्य अनन्तस्य अप्रमेयस्य मायया मर्त्यरूपस्य बलस्य ईदृग्विधानि कर्म्माण्यसंख्यान्येव सन्ति ॥ ३३ ॥ य इति ॥ अद्भुतानि आश्चर्यकराणि कर्माणि यस्य तस्यानन्तस्य शेषावतारस्य रामस्य कर्माणि यः पुमान् सायं प्रातरनुस्मरेत् स भगवतो विष्णोर्दयितः प्रियो भवेत् ॥३४॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ एकहीनाशीतितमे दशमे निरमादिमाम् ॥७९॥ अथाशीतितमे कृष्णः श्रीदामानं सुसत्कृतम् ॥ उवाच प्राक्कथां तत्र श्लोकाः सार्द्धाः शरा॰॰॰यः ॥ पञ्चाष्टौचेति पादोनाः सप्तवेदो अनुष्टुभः ॥ ८० ॥ भगवन्निति ॥ हे भगवन् हे प्रभो अनन्तवीर्यस्य महात्मनः मुकुन्दस्य यानि चान्यानि वीर्याणि प्रभावसूचकानि कर्माणि तानि वयं सर्वे

श्रोतुमिच्छाम प्रार्थने लोट्॥१॥को न्विति ॥ हे ब्रह्मन् उत्तमः श्लोको यस्य तस्य कृष्णस्य सत्कथाः कर्माणि काममार्गणैः विषयान्वेषणैर्विषण्णो विषादं प्राप्तः को नु विशेषज्ञो विवेकी असकृत् श्रुत्वापि विरमेत । तद्भावः ॥ २ ॥ सेति ॥ यया वाचा तस्य भगवतो गुणान् उपलक्षणतया कर्माणि नामानि च गृणीते पुरुषः कथयति तद्भावः । सैव वाक् सफला तस्यैव कर्मपरिचर्या यज्ञानुष्ठानादिरूपं कुरुत इति तथाभूतावेव करौ सफलावित्यर्थः । स्थिरेषु जङ्गमेषु चान्तरात्मतया वसन्तं भगवन्तमेव यत्स्मरेत्तदेव मनः सफलमित्यर्थः । यः तस्य पुण्यः पुण्यजनिकाः कथाः शृणोति स एव कर्णः श्रोत्रेन्द्रियं सफलः ॥ ३ ॥ शिर इति ॥ उभयं चराचरात्मकं तत्प्रतिमादिरूपं तद्भक्तरूपं चेति तस्यैव लिङ्गं शरीरमिति मत्वा यत् आनमेत् तदेव तु शिरः सफलमित्यर्थः । तदेव तस्य उभयलिङ्गमेव यत्पश्यति तदेव चक्षुः सफलं विष्णोरथवा तज्जनानां तद्भक्तानां पादोदकं नित्यं यानि नाभेरूर्ध्वम् अधोधारणनिषेधात् भजन्ति धारयन्ति तान्येवाङ्गानि सफलानि ॥४॥ विष्णुरातेनेति ॥ भगवति वासुदेवे निमग्नहृदयः भगवान् विष्णुरातेन परीक्षिता

को नु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ॥ विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥२॥ सा वाग्यया तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च ॥ स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥ शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ॥ अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥४॥ सूत उवाच ॥ विष्णुरातेन संपृष्टो भगवान्बादरायणिः ॥ वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥५॥ श्रीशुक उवाच ॥ कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ॥ विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ ६ ॥ यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ तस्य भार्या कुचैलस्य क्षुत्क्षामा च तथाविधा ॥ ७ ॥ पतिव्रता पतिं प्राह म्लायता वदनेन सा ॥ दरिद्रा सीदमाना सा वेपमानाभिगम्य च ॥ ८ ॥ ननु ब्रह्मन्भगवतः सखा साक्षाच्छ्रियः पतिः ॥ ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ ९ ॥

संपृष्टो बादरायणिः शुकोऽब्रवीत् ॥ ५ ॥ कृष्णस्येति युग्मम् ॥ ब्रह्मवित्तमः ब्रह्मविदां श्रेष्ठः इन्द्रियार्थेषु विषयेषु विरक्तः प्रशान्तात्मा जितेन्द्रियः यदृच्छयोपपन्नेन प्रारब्धवशात्प्राप्तेनान्नादिना वर्तमानो जीवन् तस्य प्रशान्तात्मत्वेऽपि परदृष्ट्या कष्टाधिक्यं गृहाश्रमी कश्चित् ब्राह्मणः कृष्णस्य सखा आसीत्।अस्य श्रीदामेति नाम"श्रीदामभक्तविप्रार्थं भूम्यानीतेन्द्रवैभवः।" इति बृहद्विष्णुसहस्रनामस्तोत्रवचनात् कुत्सितं चैलं यस्य तस्य श्रीदाम्नः भार्या च तथाविधा तादृशगुणा यदृच्छालब्धमन्नं तस्मै परिविश्य स्वयं क्षुधा सा दुर्बला आसीत् ॥ ६ ॥ ७ ॥ पतिव्रतेति ॥ पतिव्रता सा चैकदा म्लायता शुष्यता वदनेनोपलक्षिता दरिद्रा वेपमाना दुर्बलतया कम्पमानाङ्गी सीदमाना भर्तृभोगसम्पादनाचिन्तयाकुलचित्ता शानजार्षः चानश् वा । सा एकदा दरिद्रं पतिमभिगम्य चाह ॥ ८ ॥ नन्विति ॥ हे ब्रह्मन् ननु भगवतस्तव सखा सात्वतर्षभः यादवश्रेष्ठः साक्षाच्छ्रियः पतिः ब्रह्मण्यः ब्राह्मणभक्तः शरण्यः शरणार्हः भगवान् अस्ति ॥ ९ ॥

तमिति सार्द्धम् ॥ हे महाभाग साधूनां परायणमाश्रयभूतं तं कृष्णमुपेहि। स च सीदते कुटुम्बिने ते तुभ्यं भूरि द्रविणं दास्यति स भोजवृष्ण्यन्धकेश्वरः कृष्णोऽधुना द्वारवत्यामेवास्ते ॥ १० ॥ स्मरत इति ॥ स्वपादकमलं स्मरतः पुरुषस्य परमानन्दरूपमात्मानमपि यच्छति तर्हि जगद्गुरुः सः भजतो जनस्य नात्यभीष्टान् अतितुच्छान् अर्थकामान्ददातीति किन्नु वक्तव्यम् । स्मरतो भजत इति चतुर्थ्यर्थे षष्ठ्यौ ॥ ११ ॥ स इति सार्द्धम् ॥ स विप्रो भार्यया एवं बहुशो बहुप्रकारेण मृदु कोमलोक्त्या प्रार्थितः मन् अयं हीत्यादि संचिन्त्य गमनाय मतिं दधे स्पष्टं शेषम् ॥ १२ ॥ अपीति अर्द्धम् ॥ हे कल्याणि अपि यदि गृहे किंचिदुपायनं भगवत्समर्पणयोग्यं वस्त्वस्ति तर्हि दीयताम् ॥ १३ ॥ याचित्वेति ॥ इत्युक्ता सा चतुरो मुष्टीन् पृथुकतण्डुलान् धान्यचिपिटान् विप्रान् प्रतिवेश्यादिविप्रेभ्यो याचित्वा याचिर्द्विकर्मकः तावतैव चतुर्वर्गसिद्धे न्यूनाधिकवैयर्थ्यात् तांश्च चैलखण्डेन बध्वा भर्त्रे उपायनं प्रादात् ॥ १४ ॥ स इति ॥ स विप्राग्र्यः तान् पृथुकतण्डुलानादाय कृष्णसंदर्शनं मह्यं मम कथं स्यादिति चिन्तयन् किल द्वारकां प्रययौ ॥ १५ ॥ त्रीणि

तमुपेहि महाभाग साधूनां च परायणम् ॥ दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ॥ १० ॥
स्मरतः पादकमलमात्मानमपि यच्छति ॥ किं त्वर्थकामान्भजते नात्यभीष्टाञ्जगद्गुरुः ॥ ११ ॥ स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ अयं
हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ इति संचिन्त्य मनसा गमनाय मतिं दधे ॥ १२ ॥ अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ॥ १३ ॥
याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् ॥ चैलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥ स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ॥
कृष्णसंदर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५ ॥ त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च स द्विजः ॥ १६ ॥ विप्रोऽगम्यान्धवृष्णीनां गृहेष्व-
च्युतधर्मिणाम् ॥ गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ॥ विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ १७ ॥

इत्यर्द्धम् ॥ स द्विजः श्रीदामा त्रीणि गुल्मानि अन्तःपुरबहिर्द्वारे रक्षासैन्यानि तथा तिस्रः कक्षाः प्रतोलीश्च पुरान्तर्द्वारदीर्घगृहप्रकोष्ठानिति चक्रवर्ती । अतीयाय अतिक्रान्तवान् । "नवद्विपं नवरथं सप्तविंशतिसप्तिकम् । गुल्मैतज्ज्ञैः स्मृतं पञ्चचत्वारिंशत्पदातिकम् ॥" अत्र त्रीणि इत्यादि सर्वं श्लोकं योजयतां मते तु स द्विजः तत्रत्यद्विजैः सहितः विप्र इत्यन्वयः ॥ १६ ॥ विप्र इति सार्द्धम् ॥ विप्रः श्रीदामा अच्युतस्यैव धर्मः आराधनम् अच्युतस्य इव धर्मो ब्रह्मण्यतादिर्विद्यते येषामिति वा तेषाम् अगम्यानां दुर्गमानामन्धानामन्धकानां वृष्णीनां च गृहेषु तद्गृहनिकटे हरेर्व्यष्टसहस्राणां महिषीणां गृहेषु मध्ये श्रीमदेकतमं मुख्यं श्रीरुक्मिणीगृहं विवेश । तथा च पाद्मोत्तरखण्डगद्यम् । "स तु रुक्मिण्यन्तःपुरद्वारि क्षणं तूष्णीं स्थितः" इत्यादि । तदा च स द्विजो ब्रह्मानन्दं गतो यथा भवति तथा बभूवेति शेषः । अन्वयभेदाद् द्विज इत्यस्य न पुनरुक्तिदोषः ॥ १७ ॥

तामिति ॥ तं ब्राह्मणं दूरादेव विलोक्य प्रियायाः पर्यङ्कमास्थितः अच्युतः सहसा झटित्युत्थायाभ्येत्य प्राङ्गणमागत्य च मुदा हर्षेण दोर्भ्यां पर्यग्रहीत् आलिङ्गितवान् ॥ १८ ॥ सख्युरिति ॥ प्रियस्य सख्युः विप्रर्षेस्तस्याङ्गसङ्गेनालिङ्गनेनातीव निर्वृतः आनन्दितः प्रीतः प्रीतियुक्तश्च पुष्करेक्षणः कृष्णः नेत्राभ्यामब्बिन्दून् आनन्दाश्रुबिन्दून् अमुञ्चत् ॥ १९ ॥ अथेति सार्द्धम् ॥ हे राजन् अनन्तरं लोकपावनोऽपि भगवान् तं स्वपर्यङ्के उपवेश्य समर्हणं पूजासाधनमुपहृत्यानीय स्वयमेवास्य सख्युः पादाववनिज्य प्रक्षाल्य पादावनेजनीरपः पादक्षालनजलानि शिरसा अग्रहीत् दधार ॥ २० ॥ व्यलिम्पदित्यर्द्धम् ॥ चन्दनादिभिः साधितेन दिव्यगन्धेन तं व्यलिम्पत् ॥ २१ ॥ धूपैरिति ॥ मुदा धूपादिभिस्तं मित्रमर्चित्वा ताम्बूलं गां धेनुं च निवेद्य स्वागतमब्रवीत् पप्रच्छ । धूपैरित्यतः पुष्पाण्यूह्यानि मधुपर्कपूजोत्तरं स्नपनपूर्वकं परमान्नादिभोजनं ज्ञेयम् ॥ २२ ॥ कुचैलमिति ॥ कुचैलमिति वस्त्रप्रदानं व्यज्यते । मलिनं धमनीभिः शिराभिः सन्ततं व्याप्तं तत्र हेतुमाह क्षामं दुर्बलमिति द्विजं चामरव्यजनेन साक्षान्मुख्या देवी रुक्मिणी

तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ॥ सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥ सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ॥
प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः ॥ १९ ॥ अथोपविश्य पर्यङ्के स्वयं सख्युः समर्हणम् ॥ उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥
अग्रहीच्छिरसा राजन्भगवांल्लोकपावनः ॥ २० ॥ व्यलिम्पद्दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ॥ २१ ॥ धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा ॥
अर्चित्वाऽऽवेद्य ताम्बूलं गां च स्वागतमब्रवीत् ॥२२॥ कुचैलं मलिनं क्षामं द्विजं धमनिसंततम् ॥ देवी पर्यचरच्छैब्या चामरव्यजनेन वै ॥२३॥
अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ॥ विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥२४॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ॥ श्रिया
हीनेन लोकेऽस्मिन्गर्हितेनाधमेन च ॥२५॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन संभृतः ॥ पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥२६॥
कथयाञ्चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ॥ आत्मनोर्ललिता राजन्करौ गृह्य परस्परम् ॥ २७ ॥

पर्यचरत् वीजयामास । अत्र यदि देवी पर्यचरच्छैब्या इति पाठस्तदा शैब्या लक्ष्मणा रुक्मिणीगृहं कार्यवशादागता इति व्याख्येयम् । पद्योत्तरस्वारस्यात् ॥ २३ ॥ अन्तःपुरेति ॥ अवधूतं मलिनं तम् अमला कीर्तिर्यस्य तेन कृष्णेन अतिप्रीत्या सभाजितं सम्यक् पूजितं दृष्ट्वा अन्तःपुरजनो विस्मितोऽभूत् ॥ २४ ॥ किमिति युग्मम् ॥ योऽसौ त्रिलोकगुरुणा श्रीनिवासेन कृष्णेन पर्यङ्कस्थां श्रियं हित्वा अग्रजो यथा परिष्वक्तः आलिङ्गितः सम्भृतः संमानितश्च तेन अनेन अवधूतेन मलिनेन भिक्षुणा श्रिया हीनेन दरिद्रेण अस्मिँल्लोके गर्हितेन अधमेन नीचवत्प्रतीयमानेन किं पुण्यं कृतम् ॥ २५ ॥ २६ ॥ कथयांचक्रतुरिति ॥ हे राजन् श्रीदामकृष्णौ पुरा गुरुकुले तद्गृहे सतोर्वर्तमानयोरात्मनोर्या ललिता मनोहरा गाथाः कथास्ताः परस्परं करौ गृह्य ल्यबार्षः कथयांचक्रतुः । एतेन मध्ये मध्ये श्रीदामवाक्यमपि ज्ञेयम् ॥ २७ ॥

अपीति ॥ हे ब्रह्मन् हे धर्मज्ञ लब्धा दक्षिणा येन तस्मात् गुरुकुलात् समावृत्तेन आगत्य कृतसमावर्तनाख्यकर्मणा भवता अपि किं सदृशी स्वयोग्या भार्या ऊढा परिणीता न वा गृहस्थलिङ्गदर्शनात् भोगादर्शनाच्च संशयादिव प्रश्नः॥२८॥ अप्रतिषेधादुद्वाहमनुमतं मत्वाह—प्राय इति ॥ हे विद्वन् तथा अन्यवत् गृहेषु वर्त्तमानस्यापि ते चित्तं प्रायःकामैर्विषयैर्विहतम् आकृष्टं न भवति इत्यकामविहतम् इति मे विदितम्। कामैर्विहन्तुमशक्यमिति वा अतः धनेषु वस्त्रादिषु त्वं नैवातिप्रीयसे अतिशयप्रीतियुक्तो नैव भवसीति विदुषस्तवैतद्युक्तमिति भावः । एतच्च गृहस्थोप्ययमतिनिस्पृहो न कामयते बलाद्दत्तमपि न गृह्णातीति द्वारकायां तद्गौरवख्यापनार्थमेव तस्य सकामत्वमप्रकटीकृतवान् नापि किंचिद्दत्तवान् इति ज्ञेयम् ॥ २९ ॥ केचिदिति ॥ कामैरहतचेतसोपि केचित् दैवीः देवस्य परमेश्वरस्य सृष्टयादिकर्तुरिमाः प्रकृतीः प्रकृतिकार्यभूता नानाविधवासनाः त्यजन्तः निराकर्तुं कर्माणि कुर्वन्ति यथाहं प्रयोजनान्तररहितोऽपि लोकसंग्रहार्थं कर्म करोमि तथा ॥ ३० ॥ कच्चिदिति ॥ हे ब्रह्मन् नौ आवयोः गुरुकुले वासो यस्मिंस्तं ब्रह्मचर्याश्रमव्रतवृत्तं तत्पुरुषो वा " शयवासवासिषु " इति सप्तम्यलुक् । कच्चित्स्मरसि यतो गुरुकुलवासाद्द्विजो विज्ञेयं ज्ञातव्यं धर्मादि विज्ञाय क्रमेण तमसः संसारस्य पारं मोक्षमश्नुते प्राप्नोति

**श्रीभगवानुवाच ॥ अपि ब्रह्मन्गुरुकुलाद्भवता लब्धदक्षिणात् ॥ समावृत्तेन धर्मज्ञ भार्योढा सदृशी न वा ॥ २८ ॥ प्रायो गृहेषु ते चित्तमकामविहतं तथा ॥ नैवातिप्रीयसे विद्वन्धनेषु विदितं हि मे ॥ २९ ॥ केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ॥ त्यजन्तः प्रकृतीर्दैवीर्यथाऽहं लोकसंग्रहम् ॥ ३० ॥ कच्चिद्गुरुकुले वासं ब्रह्मन्स्मरसि नौ यतः ॥ द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ३१ ॥ स वै सत्कर्मणां साक्षाद्द्विजातेरिह संभवः ॥ आद्योऽङ्ग यत्राश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ३२ ॥ नन्वर्थकोविदा ब्रह्मन्वर्णाश्रमवतामिह ॥ ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ ३३ ॥**

॥ ३१ ॥ स इति ॥ अङ्ग हे मित्र इह संसारे यत्र संभवो जन्ममात्रं स पिता तावदाद्यः प्रथमो गुरुः पूज्यः द्विजातेः सतः पुंसः सत्कर्मणां यत्र संभवः उपनीय वेदाध्यापकः स द्वितीयो गुरुः यस्त्वाश्रमिणां सर्वेषामपि ज्ञानप्रदः सतु साक्षाद्यथाऽहं गुरुस्तथा गुरुतया संपूज्य इत्यर्थः । यद्वा । यत्र संभवो जन्म सोऽपि आद्यो गुरुः यत्र सत्कर्मणां सम्भवः स वेदाध्यापको गुरुर्यथाहमीश्वरस्तथा पूज्यः ज्ञानदो गुरुस्तु साक्षादहं वै अहमेवेति शेषं प्राग्वत् इति श्रीस्वामिपादादिभिर्गुरुत्रयपरतया व्याख्यातम् । यद्वा । स पूर्वोक्तो गुरुकुले वासो ब्रह्मचर्याश्रमः द्विजातेः सत्कर्मणां च साक्षात् आद्यो मुख्यः सम्भवः । गर्भनिस्सरणं तु शूद्रसाधारणम् । यत्र गुरुकुलवासे आश्रमिणां तत्तदुचितज्ञानप्रदः गुरुः आचार्यः यथाहं तथा तत्तुल्यतया पूज्यः यद्वा सन्ति श्रेष्ठानि कर्माणि येषां तेषाम् आश्रमिणाम् इति ॥ ३२ ॥ नन्विति ॥ हे ब्रह्मन् इह लोके ये मया गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेण अञ्जः सुखेन संसाररूपं महार्णवं तरन्ति त एव सर्वेषां वर्णानामाश्रमिणां च मध्येऽर्थकोविदाः स्वपुरुषार्थे कुशलाः ननु एतेन ज्ञानप्रदाद्गुरो-

रधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥ नाहमिति ॥ सर्वभूतानामात्माप्यहम् इज्या पञ्चमहायज्ञादिगृहस्थधर्मः प्रजातिः प्रकृष्टं जन्म उपनयनं तेन ब्रह्मचारिधर्म उपलक्ष्यते ताभ्यां तपसा अनशनादिना वनस्थधर्मेण उपशमेन इन्द्रियादिनिग्रहेण यतिधर्मेण चाहं तथा न तुष्येयं प्रीतः न स्यां यथा गुरुशुश्रूषया तुष्येयम् ॥ ३४ ॥ अपीति ॥ हे ब्रह्मन् गुरौ गुरुसमीपे निवसतां क्वचित् कदाचित् इन्धनानयनार्थं गुरुदारैश्चोदितानां नोऽस्माकं च वृत्तं किंचिद्गुरुशुश्रूषणं भाग्यात्सम्पन्नं नन्विति त्वया स्मर्यते । बहुत्वं रामाद्यपेक्षया ॥ ३५ ॥ प्रविष्टानामिति ॥ महारण्यं प्रविष्टानां सताम् अपर्तौ वर्षाकालेऽतीते शीतकाले इत्यर्थः । हे द्विज सुमहद्वातश्च वर्षं च तयोः समाहारः तीव्रं दुःसहमभूत् तथा निष्ठुरा दुःसहाः स्तनयित्नवो गर्जितवन्तो मेघाश्चाभवन् ॥ ३६ ॥ सूर्य इति ॥ तत्र सूर्यस्तावदस्तङ्गतः दिशश्च तमसा आवृताः सर्वं जलमयं जातम् अतः निम्नं कूलं नतमुन्नतं किञ्चनापि स्थानं न प्राज्ञायत ॥ ३७ ॥ वयमिति ॥ अम्बूनां संप्लवः प्रवाहो मिश्रणं वा यस्मिन् तत्र वने महद्भिरनिलैरम्बुभिश्च भृशम् अत्यन्तं

नाहमिज्याप्रजातिभ्यां तपसोपशमेन च ॥ तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥ अपि नः स्मर्यते ब्रह्मन्वृत्तं निवसतां गुरौ ॥ गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥ ३५ ॥ प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ॥ वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ ३६ ॥ सूर्यश्चास्तंगतस्तावत्तमसा चावृता दिशः ॥ निम्नं कूलं जलमयं न प्राज्ञायत किंचन ॥ ३७ ॥ वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसंप्लवे ॥ दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥ ३८ ॥ एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ॥ अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ३९ ॥ अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ॥ आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥ एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ॥ यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥

निहन्यमानाः सम्पीड्यमानाः दिशोऽविदन्तः अत एवातुरा व्याकुलचित्ताः अथ अत एव परस्परं गृहीतहस्ताः मुहुः परिबभ्रिम बभ्रमिम भ्रमेश्छिलोप आर्षः ॥ ३८ ॥ एतदिति ॥ एतत् इन्धनार्थमस्मद्गमनं विदित्वा रवौ सूर्ये उदिते सति आचार्यः सान्दीपनिर्गुरुर्नोऽस्मान् शिष्यान् अन्वेषमाणः एष्टुं गतौ । अथातुरान् अपश्यत् "उपनीय तु यः शिष्यान् वेदानध्यापयेद्द्विजः । सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षते ॥" ॥ ३९ ॥ दृष्ट्वा चाह—अहो इति ॥ हे पुत्रका यूयमस्मत्प्रयोजनायातिदुःखिताः वै इति निश्चये प्राणिनामात्मा स्वदेहः सर्वतः प्रेष्ठस्तमनादृत्य यूयं मत्पराः मत्सेवारताः ॥ ४० ॥ एतदिति ॥ सच्छिष्यैः गुरोर्निष्कृतम् उपकारः एतदेव कर्तव्यं किं तदाह यद्विशुद्धेन भावेन भक्त्या यथोचितसर्वपदार्थस्यात्मनो देहस्य च गुरावर्पणं तदर्थे विनियोगः ॥ ४१ ॥

तुष्ट इति ॥ हे द्विजश्रेष्ठा अहं युष्मभ्यं तुष्टः अतः युष्माकं मनोरथाः अपेक्षाः सत्याः सफलाः सन्तु । युष्माभिरधीतानि च्छन्दांसि वेदा इह परत्र चायातयामानि यातो यामो यस्य पक्वान्नस्य तद्गतसारं भवति गौण्या वृत्त्या अन्यदपि गतसारं यातयाममुच्यते । " जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् । " इत्यमरः । न यातयामानि न जीर्णानि अविस्मृतानि चेति आगतसाराणि इहामुष्मिकापेक्षितफलजननसमर्थानि भवन्तु ॥ ४२ ॥ इत्थमिति ॥ गुरुगृहेषु वसतामेवंविधानि बहूनि वृत्तानि तानि किं त्वया स्मर्यन्त इति शेषः । किं बहुना गुरोरनुग्रहेणैव पुमानिह पूर्णः पूर्णकामः सन् प्रशान्तये संसारदुःखनिवृत्तये मुक्तये समर्थो भवतीति शेषः ॥ ४३ ॥ संक्षेपतः सर्वोत्तरमाह—किमिति॥ हे देवदेव हे जगद्गुरो येषामस्माकं सत्यकामेन भवता सह गुरुसमीपे वासोऽभूत् तैरस्माभिः किं फलमनिर्वृत्तम् अप्राप्तं भगवता पृष्टमपृष्टं वा सर्वं संपन्नम् ॥ ४४ ॥ यस्येति ॥ हे विभो श्रेयसां धर्मादिफलानामावपनम् उत्पत्तिभूमिः छन्दोमयं वेदात्मकं ब्रह्म यस्य देहस्तस्य तव गुरुषु वासोत्यन्तविडम्बनम् । अस्मदादिशिक्षा-

तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ॥ छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४२ ॥ इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ॥ गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशान्तये ॥ ४३ ॥ ब्राह्मण उवाच ॥ किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ॥ भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥ यस्य च्छन्दोमयं ब्रह्म देह आवपनं विभो ॥ श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४५ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे अशीतितमोऽध्यायः ॥ ८० ॥ श्रीशुक उवाच ॥ स इत्थं द्विजमुख्येन सह संकथयन्हरिः ॥ सर्वभूतमयोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥ ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ॥ प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥ २ ॥ श्रीभगवानुवाच ॥ किमुपायनमानीतं ब्रह्मन्मे भवता गृहात् ॥ अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्यैव मे भवेत् ॥ भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥

र्थमत्यन्तानुकरणम् ॥ ४५ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमस्याशीतितमके व्यधात् ॥ ८० ॥ एकाशीतितमे सख्युस्तण्डुलान् भक्षयन् हरिः ॥ ददावलौकिकीमृद्धिं श्लोकाः सार्द्धाः कुवोर्द्धयः ॥ द्वे उवाचेत्यत्र चतुश्चत्वारिंशदनुष्टुभः ॥ ८१ ॥ स इति ॥ स हरिरित्थमुक्तप्रकारेण द्विजमुख्येन श्रीदाम्ना सह संकथयन् सुखगोष्ठीः कुर्वन् सर्वभूतानां मनसोऽभिज्ञः साक्षी भार्याप्रेरणया धनार्थमागतः मदर्थं पृथुकानानीय लज्जया न ददातीति तान् स्मयमानः प्रहसन् तं द्विजं प्रत्युवाच ॥१॥ ब्रह्मण्य इति॥ब्रह्मण्यः सतांगतिः आश्रयः भगवान् कृष्णः प्रहसन् स्वप्रसन्नतां सूचयन् प्रेम्णा युक्तेन निरीक्षणेन नेत्रेणैव प्रियं ब्राह्मणं प्रेक्षन् शतार्षः । उवाचेत्यनुषङ्गः ॥ २ ॥ किमिति सार्द्धम् ॥ हे ब्रह्मन् भवता गृहान्मे मह्यमुपायनं किमानीतं मद्भक्तैः प्रेम्णोपहृतं समर्पितमणु स्वल्पमपि मे भूर्यैव भवेत् अभक्तेनानादरादुपहृतं तु भूरि बह्वपि मे सन्तोषाय न कल्पते न भवति ॥ ३ ॥

पत्रमिति ॥ पत्रपुष्पादीनामन्यतममपि यः पुमान् भक्त्या मे मह्यं प्रयच्छति समर्पयति प्रयतो विशुद्ध आत्मा मनो यस्य तस्य तद्भक्त्या समर्पितमहमश्नामि प्रीत्या स्वीकरोमि ॥ ४ ॥ इतीति ॥ हे राजन् इत्युक्तोऽपि द्विजः श्रियः पतये तस्मै पृथुकप्रसृतिं न प्रायच्छत् न ददौ किंतु व्रीडितः सन्नवाङ्मुखो बभूव ॥ ५ ॥ सर्वेति ॥ तदा च साक्षात् सर्वभूतात्मदृक् अन्तःकरणसाक्षी भगवान् तस्यागमनकारणं विज्ञायात्मना यत्कर्तव्यं तदचिन्तयत् । अयं श्रीकामो धनार्थी सन् मा मां पुरा नाभजत् अतः पृथुकानानीयापि न ददाति नच किंचित् याचनं करोतीति भावः ॥ ६ ॥ पत्न्या इति ॥ अयं सखा पतिव्रतायाः पत्न्याः प्रियचिकीर्षया एव न धनार्थमयं मां प्राप्तः । पतिव्रताया इत्यनेन तस्या अप्येतत् प्रसादानुरोधेनैव सकामत्वम् । स्वतस्तु निस्पृहत्वमेव अतः अमर्त्यानां देवानामपि दुर्लभाः सम्पदो धनादिसमृद्धीरस्य दास्यामीति ॥ ७ ॥ इत्थमिति ॥ इत्थं सञ्चिन्त्य वस्त्रस्यातिजीर्णत्वात्तन्मध्ये चीरेण बद्धान् पृथुकतण्डुलान् इदं किमिति पृच्छन् तद्वसनात् स्वयमेव जहार ॥ ८ ॥ नन्विति ॥ अङ्ग हे सखे

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥४॥ इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ॥ पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥ सर्वभूतात्मदृक् साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिन्तयन्नायं श्रीकामो माऽभजत्पुरा ॥ ६ ॥ पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ॥ प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभाः ॥ ७ ॥ इत्थं विचिन्त्य वसनाच्चीरबद्धान्द्विजन्मनः ॥ स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥ ८ ॥ नन्वेतदुपनीतं मे परमप्रीणनं सखे ॥ तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥ ९ ॥ इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ॥ तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥ एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये ॥ अस्मिँल्लोके तथाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥ ११ ॥**

ननु निश्चितम् उपनीतमुपायनमेतत् पृथुकतण्डुलात्मकं मे मम परमं प्रीणनं तृप्तिकरं यतः एते पृथुकतण्डुला मां मदाश्रितं विश्वं च तर्पयन्ति तृप्तं कुर्वन्ति ॥ ९ ॥ इतीति ॥ इत्युक्त्वा सकृदेकां मुष्टिं जग्ध्वा द्वितीयां मुष्टिं जग्धुम् अत्तुमाददे तावत्तददनात्पूर्वमेव तत्परा भगवदेकनिष्ठा श्रीर्लक्ष्म्यंशभूता रुक्मिणी परमेष्ठिनः कृष्णस्य हस्तं जगृहे ॥ १० ॥ एतावतेति ॥ हे विश्वात्मन् त्वत्तोषस्य कारणं यथा भवति तथा पुंसस्त्वद्भक्तस्यास्मिन् अथवामुष्मिन् लोके सर्वासां सम्पदां समृद्धये यां भक्तसमृद्धिं दृष्ट्वा त्वं तुष्यसि तत एतावता एकमुष्ट्यदनमात्रेणैवालम् । अत्र महाकठोराः पृथुका भगवन्तं व्यथयिष्यन्तीति देव्याः स्वगताऽभिप्रायः स्वयमेव सर्वं भोक्ष्यसे तदाहं तव सख्युरुपायनात् स्वसखीभ्यः पुत्रादिभ्यश्च विभज्य किं दास्यामीति श्रीदामानं ज्ञापयामास । श्रीस्वामिपादास्तु प्राहुः । एतावता पुंस इहामुत्र च मत्कटाक्षविलासभूतानां समृद्धये अलम् । अतः परं द्वितीयमुष्ट्यदनेन मामपि तदधीनां मा कुरु इति । यद्वा । सर्वसम्पत्समृद्ध्यर्थं त्वत्तोष एव कारणं विसर्गलोपस्त्वार्षः ॥ ११ ॥

ब्राह्मण इति ॥ ब्राह्मणस्तु अच्युतस्य मन्दिरे स्वाद्वन्नं भुक्त्वा स्वादु पेयं च पीत्वा सुखं यथा स्यात्तथा तां रात्रिमुषित्वा चात्मानं स्वर्गतं स्वर्गवासिनमिव मेने ॥ १२ ॥ श्व इति ॥ हे तात ततः श्वोभूते सूर्ये उदिते सति विश्वभावेन सर्वप्रकारेण स्वसुखेन परमानन्देन भगवता पथ्यनुव्रज्य अनुगम्य गन्तव्यं पुनः कृपया शीघ्रमागन्तव्यमिति विनयोक्त्या नन्दितोऽभिवन्दितश्च स्वालयं स्वगृहं प्रति जगाम ॥ १३ ॥ स इति ॥ स च ब्राह्मणः कृष्णाद्धनमलब्ध्वापि स्वयं व्रीडितः कार्पण्येन लज्जितो न याचितवान् किंतु महतो भगवतो दर्शनेनैव निर्वृतः आनन्दितः स्वगृहान् प्रति आगच्छत् ॥ १४ ॥ अहो इति ॥ ब्रह्मण्यदेवस्य ब्राह्मणभक्तानां फलप्रदस्य कृष्णस्याहो आश्चर्यजनिका ब्रह्मण्यता ब्राह्मणकुले साधुता मया दृष्टा । यत् उरसि लक्ष्मीं बिभ्रतापि तेनाहं दरिद्रतमोऽपि आश्लिष्ट आलिङ्गित इति ॥ १५ ॥ क्वेति ॥ दरिद्रः पापीयान् दारिद्र्यानु-

ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमन्दिरे ॥ भुक्त्वा पीत्वा सुखं मेन आत्मानं स्वर्गतं यथा ॥ १२ ॥ श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः ॥ जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥ १३ ॥ स चालब्ध्वा धनं कृष्णान्न तु याचितवान्स्वयम् ॥ स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १४ ॥ अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ॥ यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १५ ॥ क्वाहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः ॥ ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १६ ॥ निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ॥ महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥ १७ ॥ शुश्रूषया परमया पादसंवाहनादिभिः ॥ पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥ स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ॥ सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥ अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ॥ इति कारुणिको नूनं धनं मे भूरि नाददात् ॥ २० ॥ इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् ॥ सूर्यानलेन्दुसंकाशैर्विमानैः सर्वतो वृतम् ॥ २१ ॥ विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥ जुष्टं स्वलंकृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः ॥ २२ ॥

मितपापातिशयवान् अहं क्व । श्रीनिकेतनः लक्ष्म्याश्रयः कृष्णश्च क्व । तथाप्ययं ब्रह्मबन्धुरिति मत्वा तेन बाहुभ्याम् अहं परिरम्भितः ॥ १६ ॥ निवासित इति ॥ अध्वनि श्रान्तोऽहं भ्रातरो यथा प्रियया जुष्टे सेविते पर्यङ्केहन्निवासितः उपवेशितः तथा वालव्यजनहस्तया महिष्या वीजितश्च ॥ १७ ॥ शुश्रूषयेति ॥ पादसंवाहनमादिर्येषां चन्दनलेपनादीनां तैः परमया शुश्रूषया देवानां देवेनाऽपि विप्रदेवेन ब्राह्मणशुश्रूषकेण कृष्णेन देववदहं पूजितः ॥ १८ ॥ स्वर्गेति ॥ यद्यपि पुंसां रसायां पाताले भुवि च सम्पदां सर्वासां सिद्धीनाम् अणिमादीनां च स्वर्गापवर्गयोः स्वर्गमोक्षयोश्च कारणं तस्य भगवतश्चरणार्चनमेव ॥ १९ ॥ अधन इति ॥ तथापि कारुणिकः कारुणिकत्वात् अधनोऽयं धनं प्राप्योच्चैर्माद्यन् गर्वितः सन्मां न स्मरेत् ततो भ्रश्येदित्यभिप्रेत्याऽभूरि स्वल्पमपि धनं मह्यं नाददात् ॥ २० ॥ इतीति सार्द्धयुग्मम् ॥ स्वान्तःकरणे इत्येवं संचिन्तयन्

नतु स्फुटं वदन् सूर्यादिसंकाशैः तद्वद्दीप्यमानैर्विमानैः तत्सदृशगृहभेदैः सर्वतो वृतमिति कूजतां द्विजानां पक्षिणां कुलानि तैराकुलैर्व्याप्तैर्विचित्रैरुपवनैरुद्यानैश्च वृतं तथा प्रोत्फुल्लानि कुमुदादीनि येषु तैर्वारिभिर्जलैश्च जुष्टं युक्तं स्वलङ्कृतैः पुंभिः हरिणानामिवाक्षीणि यासां ताभिः स्त्रीभिश्च जुष्टं निजगृहस्य अन्तिकं समीपं प्राप्तः हरिणाक्षिभिरित्युभयविशेषणत्वान्न समासान्तः इति तोषणी। वस्तुतः "पुमान् स्त्रिया वा इत्यनेन हरिणाक्षैरिति भाव्यम्। अत्रैवं ज्ञेयं श्रीदाम्नो द्वारकावासरात्रौ स्वगृहे सुप्तायां तत्पत्न्यां सर्वस्थानं तद्रूपादिकं च दिव्यमभूत्। प्रातर्दिव्यदास्यादेरुक्त्या स्वभर्तृसङ्गतश्रीकृष्णदत्तं ज्ञात्वा विस्मितया पत्न्यागमनज्ञापका जनास्तन्मार्गे नियुक्ता इति ॥ २१ ॥ २२ ॥ किमिति सार्द्धकम् ॥ प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्य वेदं स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमित्येवंरूपमभूत्। एवं मीमांसमानं विचारयन्तं महाभागं तं द्विजम् अमरप्रभा देवतुल्यकान्तयः नरा नार्यश्च भूयसा गीतवाद्येन प्रत्यगृह्णन् उपायनादिभिरादृतवन्तः इत्यनेन तत्पुरवासिनः सर्वे एव भगवता सर्वसंपद्भिः पूर्णा सुरूपाश्च कृता इति सूचितम् ॥ २३ ॥ २४ ॥ पतिमिति ॥ पतिमागतमाकर्ण्य श्रुत्वा उद्भूतेन हर्षेणातिसम्भ्रमो व्याकुलता यस्याः सा तत्पत्नी तूर्णम् आलयात्

**किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥२३॥ एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागं गीतवाद्येन भूयसा ॥२४॥ पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसंभ्रमा ॥ निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥ २५ ॥ पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाऽश्रुलोचना ॥ मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥ पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव ॥ दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥ २७ ॥ प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ॥ मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २८ ॥ पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ॥ पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥**

कमलवनात् रूपिणी श्रीर्लक्ष्मीरिव तूर्णं शीघ्रं गृहान्निश्चक्राम। स्वर्गस्य तत्र भगवता आनीतत्वात् स्वर्गिणामिव वयो रूपं च बभूवेति भावः ॥२५॥ पतिव्रतेति ॥ पतिं दृष्ट्वा प्रेम्ण उत्कण्ठावृद्धिः तया अश्रूणि आनन्दजलबिन्दवो लोचनयोर्यस्याः सा तथाप्यश्रुपातेनास्यापशकुनं मा भूदित्याशयेन मीलिते अक्षिणी यया सा पतिव्रता पतिं दृष्ट्वा अयमेव वन्द्य इति बुद्ध्या निश्चयेन अनमत् मनसा च परिषस्वजे आलिङ्गितवती ॥ २६ ॥ पत्नीमिति ॥ स ब्राह्मणः वैमानिकीं विमानारूढां देवीं देवस्त्रियमिव विस्फुरन्तीं दीप्यमानां निष्कः पदकाख्यभूषणं कण्ठे यासां तासां दासीनां मध्ये अधिकतया भान्तीं शोभमानां पत्नीं वीक्ष्य विस्मितः ॥ २७ ॥ प्रीत इति ॥ प्रीतश्च तया पत्न्या युक्तः स्वयं सः मणीनां स्तम्भशतेनोपेतं युक्तं किं बहुना महेन्द्रस्य भवनं यथा शोभते तथा शोभमानं निजमन्दिरं प्रविष्टः ॥ २८ ॥ पय इति ॥ यत्र मन्दिरे दान्ता हस्तिदन्तनिर्मिताः पयःफेननिभाः दुग्धफेनवन्मृदुलशुभ्रास्तरणयुक्ताः रुक्ममयाः परिच्छदाः पत्रकीलादयो यासां ताः शय्याः सन्तीति सर्वत्र क्रियाशेषः। रुक्ममयाः परिच्छदा येषां ते दान्ताः पर्यङ्काश्च हेममयो दण्डो येषां तानि

चामरव्यजनानि सन्ति ॥ २९ ॥ आसनानीति ॥ यत्र मृदूनि तूलादिमयानि उपस्तरणानि येषु तानि हैमानि सुवर्णमयानि आसनानि च मुक्तादाम्नां विलम्बा येषु सन्तीति तथाभूतानि अत एव द्युमन्ति कान्तियुक्तानि च वितानानि सन्ति ॥ ३० ॥ स्वच्छेति ॥ महान्तो मरकता इन्द्रनीलमणयो येषु स्वच्छेषु स्फटिकमयकुड्येषु रत्नान्येव दीपाश्च तथाभूतैः संयुक्ता अत एव भ्राजमाना ललना उत्तमस्त्रियश्च सन्ति ॥ ३१ ॥ विलोक्येति ॥ तत्र भवने एवं सर्वसम्पदां समृद्धिं विलोक्य निर्व्यग्रः सावधानचित्तो ब्राह्मणः अहैतुकीम् आकस्मिकीं स्वस्य समृद्धिं तर्कयामास । कुत एषा समृद्धिरागतेति चिन्तितवानित्यर्थः ॥ ३२ ॥ निश्चिनोति—नूनमिति ॥ बताश्चर्ये नूनं दुर्भगस्य भाग्यहीनस्य शश्वत्सर्वदा दरिद्रस्य एष चासावहं च तस्य मम समृद्धिहेतुर्महाविभूतेः यदूत्तमस्य श्रीकृष्णस्यावलोकतः कृपादृष्टेरन्यो नैवोपपद्येत नैव संभाव्येतेति नूनं निश्चितमेव । सर्वं तत्कृपादृष्ट्यैव जातम् ॥ ३३ ॥ नन्विति ॥ भूरिभोजः बहुभोगवान् लक्ष्मीपतित्वात् आप्तकामत्वाच्च मे मम सखा दाशार्हकाणामृषभः श्रेष्ठः श्रीकृष्णः स्वयं तद्देयमिन्द्रा-

आसनानि च हैमानि मृदूपस्तरणानि च ॥ मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥ स्वच्छस्फटिककुड्येषु महामारकतेषु च ॥ रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥ विलोक्य ब्राह्मणस्तत्र समृद्धिं सर्वसंपदाम् ॥ तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥३२॥ नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ॥ महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥३३॥ नन्वब्रुवाणो दिशतेऽसमक्षं याचिष्णवे भूर्यपि भूरिभोजः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥ ३४ ॥ किञ्चित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ॥ मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥ तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनि जन्मनि स्यात् ॥ महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥

दिवैभवमपि पर्जन्यवत् पर्जन्य इव ईक्षमाणः अतितुच्छं मन्वानः श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिन्द्रादिपदमप्यतितुच्छम्मन्वानस्तस्य च भजनं बहु मन्यमानः समक्षमब्रुवाण एव दिशति । यद्वा । मम सखा असौ असमक्षं याचिष्णवे साक्षादयाचकाय गूढेच्छायुक्ताय अब्रुवाणोऽपि असमक्षमपि भूर्यपि ददातीत्यन्वयः । याचिष्णवे याचकाय समक्षमब्रुवाण एव भूरि अपि बह्वपि दिशते ददाति । यथा समुद्रपूरकोऽतिवदान्यः पर्जन्यः कदाचित् बह्वपि वर्षमल्पमेव मन्यमानो लज्जयेव समक्षमवर्षन् यथा कर्षके रात्रौ शयान एव तत्क्षेत्रमाप्लावयति तथा ॥ ३४ ॥ किंचिदिति ॥ यद्व उरु बह्वपि स्वदत्तमैश्वर्यादि किंचित्करोति स्वल्पं मन्यते । सुष्ठु प्रेमयुक्तं हृत् हृदयं यस्य तेन भक्तेन कृतं भजनं फल्गु स्वल्पमपि भूरिकारि बहु करोतीति तथा सः यतः स महात्मा उदारचित्तः मयोपनीतं पृथुकैकमुष्टिं प्रीतियुक्तः प्रत्यग्रहीत् ॥ ३५ ॥ तस्येति ॥ गुणालयेन ऐश्वर्यादिगुणसम्पन्नेन महानुभावेन श्रीकृष्णेनैव प्रेरितस्य विषज्जतः विशेषेण सङ्गं प्राप्नुवतो मम जन्मनि जन्मनि तस्यैव सौहृदादिकं तस्य पुरुषाणां भक्तानां

प्रकृष्टसङ्गश्च स्यादित्यन्वयः । तत्र सौहृदं प्रेम सख्यं विश्वासः मैत्री उपकाराशंसनं दास्यं सेवकत्वं च तत्समाहारैकवचनम् ॥ ३६ ॥ ननु तव भक्तिरस्त्येव तत्फलं च सम्पत्तिर्जातेत्याशङ्क्य नास्ति मे भक्तिर्नापि तत्फलं सम्पदित्याह–भक्तायेति ॥ स्वयं विचक्षणः अजः भगवान् धनिनां धनमदेन उद्भवो जन्म यस्य तं नरकादौ निपातं पश्यन् अदीर्घबोधाय अविवेकिने मादृशाय भक्ताय चित्राः सम्पदः कोशादीन् राज्यमैश्वर्यं विभूतीः कलत्रपुत्रपौत्रादीन् न समर्थयति न प्रयच्छति अपि तु दृढां भक्तिमेव । मम तु भक्त्यभावात्समृद्ध्यादिजातम् अतो भक्तिरेव भवतु समर्थयति इत्यत्र अर्थयतेर्हेतुमाण्णिच् । समर्द्धयतीति पाठे ऋध्यतेः ऋध्नोतेर्वा णिच् । उभयथा दानमेव पर्यवसितोर्थः ॥३७॥इत्थमिति ॥ बुद्ध्या इत्थं व्यवसितः कृतनिश्चयः तत्र हेतुः जनार्दने अतीव भक्तः अत एव विषयान् त्यक्ष्यन् विषयत्यागमभ्यसन् अत एव नातिलम्पटः तेष्वत्यासक्तिरहितो जायया सह तान् बुभुजे ॥ ३८ ॥ कृष्णस्य ब्रह्मण्यता नातिचित्रम् इत्याह–तस्येति ॥ देवानां देवस्य यज्ञपतेः प्रभोः तस्य हरेर्ब्राह्मणा एव प्रभवः स्वामिनः

भक्ताय चित्रा भगवान्हि संपदो राज्यं विभूतीर्न समर्धयत्यजः ॥ अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥ इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ॥ विषयाञ्जायया त्यक्ष्यन् बुभुजे नातिलम्पटः ॥३८॥ तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ॥ ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥३९॥ एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ४० ॥ एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ॥ लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ४१ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥ श्रीशुक उवाच ॥ अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ॥ सूर्योपरागः सुमहानासीत्कल्पक्षये यथा ॥ १ ॥

दैवं च तेभ्यः परमुत्कृष्टमन्यन्न विद्यते इति ॥ ३९ ॥ एवमिति ॥ भगवतः सुहृत् भक्तः स विप्रः अन्यैरपराजितमपि भगवन्तमेवं स्ववृत्तान्तेन तदा स्वभृत्यैः पराजितं वशीकृतं दृष्ट्वा तस्यैव ध्यानवेगेनोद्ग्रथितमुन्मोचितमात्मनः स्वस्य बन्धनमहंकारो यस्य सः अविरत एव सतां गतिं प्राप्यं तस्य धाम वैकुण्ठाख्यं स्थानं लेभे प्राप्तवान् । गतिमित्यजहल्लिङ्गं धामविशेषणम् ॥ ४० ॥ एतदिति ॥ ब्रह्मण्यदेवस्य श्रीकृष्णस्यैतत् सुदाम्ने सम्पत्प्रतिपादनं ब्रह्मण्यतां ब्राह्मणभक्तिं च श्रुत्वा भगवति तस्मिन् लब्धो भावो भक्तिर्येन तथाभूतः सन्नरः कर्मरूपाद्बन्धाद्विमुच्यते ॥४१॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमस्यैकाशीतितमे व्यधात् ॥ ८१ ॥ द्व्यशीतितमकै सूर्यग्रहे राज्ञामभून्मिथः ॥ कुरुक्षेत्रे कृष्णकथा तत्र श्लोका नवाब्धयः ॥ सप्तोर्वाचेति पादोनाश्चतुर्बाणा अनुष्टुभः ॥८२॥ अथेति ॥ एकदा युधिष्ठिरराजसूयात्पूर्वं रामव्रजागमनादूर्ध्वं कदाचिन्मथुरां त्यक्त्वा रामकृष्णयोर्द्वारकायां वसतोः सतोः कल्पक्षये कल्पावसाने यथा भवति तथा सुमहान् सर्वग्रासात्मकः सूर्योपरागः सूर्यग्रहणमासीत् ॥१॥

तमिति ॥ हे राजन् तं सूर्योपरागं ज्योतिर्विद्भिः कथ्यमानं ज्ञात्वा पुरस्तात् ततः पूर्वत एव सर्वदेशतो मनुजाः श्रेयोविधित्सया पुण्यार्जनेच्छया स्यमन्तपञ्चकं नाम कुरुक्षेत्रं ययुः ॥२॥ क्षेत्रस्य पापनाशकत्वमाह—निःक्षत्रियामिति ॥ शस्त्रभृतां वरः रामः भार्गवः महीं निःक्षत्रियां कुर्वन् यत्र पापिनां नृपाणां रुधिरौघेण रुधिरधारया महाह्रदान् चक्रे ॥ ३ ॥ ईजे इति ॥ कर्मणा नृपवधप्रयुक्तपापेन अस्पृष्टः अपि भगवान् ईशः रामो लोकस्य ग्राहयन् अन्येऽप्येवं कुर्युरिति शिक्षयितुं यथान्यः प्राकृतपुरुष इव अघापनुत्तये पापविनाशाय यत्र क्षेत्रे ईजे च तत्क्षेत्रं ययुरिति पूर्वेण संबन्धः ॥ ४ ॥ महत्यामिति सार्द्धम् ॥ महत्याम् अतिशयितपुण्यावहायां तीर्थयात्रायां तत्र क्षेत्रे भारतीः भारत्यः भारतवर्षस्थाः पूर्वसवर्णदीर्घ आर्षः । प्रजाः अगन् जग्मुः मलोप आर्षः उपोतोक्तरीत्या वा साध्यम् । तथा अक्रूरादयो वृष्णयश्च स्वं स्वकीयमघं क्षपयिष्णवः निरसितुमिच्छवस्तत् क्षेत्रं ययुः ॥ ५ ॥ गदेति ॥ गदप्रद्युम्नसाम्बाद्याः सुचन्द्राद्याश्च तत् क्षेत्रं ययुः । तथा अनिरुद्धः यूथपः सेनानीः कृतवर्मा च रक्षायां निमित्तभूतायां द्वारकायामास्ते

तं ज्ञात्वा मनुजा राजन्पुरस्तादेव सर्वतः ॥ स्यमन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥ निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ॥ नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥ ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ॥ लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥४॥ महत्यां तीर्थयात्रायां तत्राऽगन्भारतीः प्रजाः ॥ वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ॥ ५ ॥ गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणाः ॥ आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ॥ ६ ॥ ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ॥ ७ ॥ व्यरोचन्त महातेजाः पथि काञ्चनमालिनः ॥ दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खेचरा इव ॥ ८ ॥ तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः ॥ ब्राह्मणेभ्यो ददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥ ९ ॥ रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ॥ १० ॥

सुचन्द्रो रुक्मिणीपुत्रश्चारुचन्द्रनामा शुकसारणौ यादवौ ॥ ६ ॥ ते इति युग्मम् ॥ देवधिष्ण्याभैर्देवविमानसदृशैः रथैः तरलास्तरङ्गास्तद्वत्प्लवो गतिर्येषां तैर्हयैः नदद्भिर्नादं कुर्वद्भिः अभ्राभैः नीलमेघसदृशगर्जितैः विद्याधराणामिव द्युतिर्येषां तैर्नृभिश्च कलत्रैश्च सह काञ्चनमालायुक्ताः दिव्याः स्रगादयो येषां ते महातेजाः महातेजसः तेजशब्दोऽदन्तोऽपि ते यादवाः पथि खेचरा देवा इव व्यरोचन्त ॥७॥८॥ तत्रेति ॥ तत्र तीर्थे स्नात्वा उपोष्य सूर्योपरागनिमित्तमेवोपोषणम् । तीर्थोपवासस्य तत्र निषिद्धत्वात् सावधानाश्च ते ब्राह्मणेभ्यो धेनूर्ददुः स्पष्टं शेषम् ॥ ९ ॥ रामेति ॥ एवं मुख्ये सरसि स्नात्वा वृष्णयः पुनः रामनिर्मितेषु नवस्वपि ह्रदेषु विधिवदाप्लुत्य स्नात्वा कृष्णे नोऽस्माकं भक्तिरस्त्वित्यभिप्रेत्य ब्राह्मणेभ्यः ग्रहणमुक्तिस्नाने कृतेऽन्नं ददुः ॥ १० ॥

स्वयमिति ॥ कृष्ण एव देवता येषां ते वृष्णयः तैर्ब्राह्मणैरनुज्ञाताः कामं यथेच्छं भुक्त्वा स्निग्धा सान्द्रा शीतला छाया येषाम् अङ्घ्रिपानां वृक्षाणां तेषामङ्घ्रिपु मूलेषु
उपविविशुः ॥ ११ ॥ तत्रेति सार्द्धद्वयम् ॥ ते वृष्णयस्तत्र कुरुक्षेत्रे आगतान् सुहृदादीन् ददृशुरिति सार्द्धद्वयान्वयः । मत्स्यादयः शब्दास्तत्तद्देशवासिजनपराः आरदके-
रलान् इति पाठे आरदाः सिन्धुपारीणाः आनर्त्तकेरलानिति स्फुटः पाठः आत्मपक्षीयान् स्वपक्षपातिनः परान् शत्रूंश्च चिरमुत्कण्ठाप्रीतिपूर्वकानुध्यानमासां जातेति तथाभूता
गोपीश्च ददृशुः ॥ १२ ॥ १३ ॥ अन्योन्येति ॥ अन्योन्यस्य संदर्शनेन यो हर्षस्तस्य रंहसा वेगेनातिशयेन प्रोत्फुल्लानि हृद्वक्त्राण्येव सरोरुहाणि तैः श्रीः शोभा येषां ते
तथा नयनैः स्रवन्ति जलानि येषां ते तथा हृष्यन्त्यः उदञ्चितरोमाणस्त्वचो येषां ते तथा बाष्पेण रुद्धा गद्गदा गिरो येषां ते जना गाढं यथा तथा आश्लिष्य आलिङ्ग्य मुदं
हर्षं ययुः ॥ १४ ॥ स्त्रिय इति ॥ तथा स्त्रियश्च संवीक्ष्य अतिसौहृदं प्रेमातिशयः स्मितं मन्दहासः अमलाः अपाङ्गा नेत्रप्रान्ताः तैर्युक्ता दृशो दृष्टयो यासां ताः तथा

स्वयं च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ भुक्त्वोपविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ॥ ११ ॥ तत्रागतांस्ते ददृशुः सुहृत्संबन्धिनो
नृपान् ॥ मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान् ॥ १२ ॥ काम्बोजकेकयान्मद्रान्कुन्तीनानर्तकेरलान् ॥ अन्यांश्चैवात्मपक्षीयान्परांश्च
शतशो नृप ॥ नन्दादीन्सुहृदो गोपान्गोपीश्चोत्कण्ठिताश्चिरम् ॥ १३ ॥ अन्योऽन्यसंदर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आ-
श्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १४ ॥ स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे ॥
स्तनैः स्तनान्कुङ्कुमपङ्करूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १५ ॥ ततोऽभिवाद्य ते वृद्धान्यविष्ठैरभिवन्दिताः ॥ स्वागतं कुशलं पृष्ट्वा
चक्रुः कृष्णकथां मिथः ॥ १६ ॥ पृथा भ्रातॄन्स्वसॄर्वीक्ष्य तत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुन्दं च जहौ संकथया शुचः ॥ १७ ॥ कुन्त्युवाच ॥
आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ॥ यद्वा आपत्सु मद्वार्तां नानुस्मरथ सत्तमाः ॥ १८ ॥

प्रणयेन भीत्या अश्रूणि लोचनयोर्यासां ताः कुङ्कुममेव पङ्कस्तेन रूषितान् स्तनान् तादृशैरेव स्वस्तनैर्निहत्य सम्पीड्य दोर्भिर्मिथोऽभिरेभिरे परिषस्वजिरे ॥ १५ ॥ तत
इति ॥ ततश्च ते यादवा मत्स्यादयश्च यविष्ठैर्न्यूनवयस्कैरभिवादिताः वृद्धान् अधिकवयस्कान् अभिवाद्य स्वगतं कुशलं च पृष्ट्वा मिथः कृष्णकथाश्चक्रुः ॥ १६ ॥ पृथेति॥
तत्र पृथा कुन्ती भ्रात्रादीन् वीक्ष्य संकथया मिथः सप्रेमगोष्ठ्या शुचः क्लेशान् जहौ तत्याज । भ्रातॄन् वसुदेवादीन् स्वसॄः श्रुतदेव्यादाः तत्पुत्रान् रामादीन् पितरौ
शूरं भोजाख्यं मातरं च भ्रातृपत्नीर्देवक्याद्याः ॥ १७ ॥ तत्र पृथाह—आर्येति ॥ हे आर्य भ्रातः अहमात्मानमकृताशिषम् अकृतपुण्यं मन्ये । कुतः यत् यस्मात् सत्तमाः
श्रेष्ठा अपि यूयं आपत्स्वपि मद्वार्तां नानुस्मरथ ॥ १८ ॥

ल्यसाधर्म्यात् मातृनाम्ना सम्बोधयति । दैवस्य परमेश्वरस्य क्रीडनकान् क्रीडाप्रसाधनभूतान्नरान् अस्मान् मासूयेथाः दोषारोपेण माद्राक्षीः । हि यस्मात् लोकः सर्वोऽपि जनः ईशस्यान्तर्यामिणो वशे भवति अतस्तत् प्रेरित एव कुरुते अथवा तेनैव कार्यते च ॥ २० ॥ कंसेति ॥ हे स्वसः कंसेन प्रतापिताः क्लेशिताः सर्वे वयं दश दिशः दिशं दिशं याताः पलायिताः एतर्ह्येव सम्प्रत्येव दैवेन प्रारब्धफलप्रदेन पुनः स्वस्थानमासादिताः प्रापिताः ॥ २१ ॥ वसुदेवेति ॥ ते समागताः कुरुमत्स्यादयो नृपा वसुदेवादिभिरर्चिताः अच्युतस्य श्रीकृष्णस्य सन्दर्शनजपरमानन्देन निर्वृताः सुखिता आसन् ॥ २२ ॥ भीष्म इति चतुष्कम् ॥ हे राजेन्द्र अम्बिकापुत्रो धृतराष्ट्रः गान्धारी तद्भार्या तत्सुता दुर्यो-

सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ॥ नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ १९ ॥ वसुदेव उवाच ॥ अम्ब मास्मानसूयेथा दैवक्रीडनकान्नरान् ॥ ईशस्य हि वशे लोकः कुरुते कार्यतेऽथ वा ॥ २० ॥ कंसप्रतापिताः सर्वे वयं याता दिशो दश ॥ एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ २१ ॥ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ॥ आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः ॥ २२ ॥ भीष्मो द्रोणोम्बिकापुत्रो गान्धारी ससुता तथा ॥ सदाराः पाण्डवाः कुन्ती सृञ्जयो विदुरः कृपः ॥ २३ ॥ कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् ॥ पुरुजिद् द्रुपदः शल्यो धृष्टकेतुः सकाशिराट् ॥ २४ ॥ दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ ॥ युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥२५॥ राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः ॥ श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥ २६ ॥ अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदा युक्ता वृष्णीन्कृष्णपरिग्रहान् ॥ २७ ॥ अहो भोजपते यूयं जन्मभाजो नृणामिह ॥ यत्पश्यथासकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २८ ॥ यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ॥ भूः कालभर्जितभगापि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ २९ ॥

धनादयः युधिष्ठिरमनुव्रता इति । तदानीं तस्य राज्यार्द्धप्राप्तेः श्रीनिकेतं शोभातिशयाश्रयं सस्त्रीकं स्त्रीभिः सहितं शौरेः श्रीकृष्णस्य वपुर्वीक्ष्य तत्सौन्दर्यातिशयेन विस्मिता जाताः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ अथेति ॥ अथ रामकृष्णाभ्यां सम्यक् प्राप्तं समर्हणमासनभोजनादिसम्माननं यैस्ते मुदा युक्ताः कृष्णेन स्वीयत्वेन परिगृह्यन्ते तान् वृष्णीन् प्रशशंसुः ॥ २७ ॥ अहो इति ॥ अहो भोजपते हे उग्रसेन इह लोके नृणां मध्ये यूयं यादवा एव जन्मभाजः सफलजन्मानः यत् यस्मात् योगिनामपि दुर्दर्शं द्रष्टुमशक्यं श्रीकृष्णमसकृत् निरन्तरं पश्यथ ॥ २८ ॥ यदिति ॥ यदिति पृथक् । पदमव्ययं यस्येत्यर्थकम् श्रुतिभिर्नुता संस्तुता यस्य विश्रुतिः कीर्त्तिरिदं विश्वमलं पुनाति । यस्य

पादावनेजनपयः पादप्रक्षालनजलं तदात्मिका गङ्गा च जगत्पुनाति । यस्य च वचो वेदगीताद्यात्मकं शास्त्रं श्रवणकीर्तनानुष्ठानादिना विश्वं पुनाति । किंच कालेन भर्जितं दग्धं विनष्टं भगं माहात्म्यं शक्तिर्यस्याः सा तथाविधापि भूः यस्याङ्घ्रिपद्मस्पर्शेनोत्था पुनराविर्भूता शक्तिर्यस्याः सा नोऽस्माकमखिलान् अर्थानभितो वर्षति ॥ २९ ॥ तदिति ॥ निरयस्य वर्त्मनि मार्गे वर्ततां वर्तमानानां शतार्षः । येषां वः तस्य भगवतो दर्शनादिभिः सहितो यौनेन विवाहसंबन्धेन च सहितः सपिण्डबन्धः गोत्रसंबन्धोऽस्ति । येषां च वो गृहे स्वर्गापवर्गाभ्यां विरमयति वितृष्णान् करोतीति तथेति परमफलरूपत्वात् स विष्णुर्भगवान् स्वयमेवास आविरासीत्ते यूयं जन्मभाज इति संबन्धः । दर्शनं च स्पर्शनं च अनुपथः अनुगमनं च प्रजल्पो गोष्ठी च शय्या शयनं च आसनमुपवेशनं च अशनं भोजनं चेतीतरेतरद्वन्द्वः । यद्वा तदिति सामान्यनिर्देशः स इत्यर्थः । स विष्णुः येषां वो निरयवर्त्मनि संसारकारणे वर्तमानानामपि बध्यते संबध्यते बन्धः संदर्शनादिभिः संबद्धः सन् स्वर्गापवर्गविरमः परमसुखप्रदः आस ॥ ३० ॥ नन्द इति ॥ नन्दस्तत्र कुरुक्षेत्रे कृष्णपुरोगमान् यदून् प्राप्तान् श्रुत्वा कृष्णादिदर्शनेच्छया गोपैर्वृतः तत्सन्निधौ वासचिकीर्षया अनःसु शकटेषु स्थापितैरर्थैः सहैव तत्रागमत् ॥ ३१ ॥ तमिति ॥

**तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ॥ येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३० ॥ श्रीशुक उवाच ॥ नन्दस्तत्र यदून्प्राप्ताञ्ज्ञात्वा कृष्णपुरोगमान् ॥ तत्रागमद्वृतो गोपैरनःस्थार्थैर्दिदृक्षया ॥ ३१ ॥ तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ॥ परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ३२ ॥ वसुदेवः परिष्वज्य संप्रीतः प्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासं च गोकुले ॥ ३३ ॥ कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ॥ न किंचनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ३४ ॥ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ॥ यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ३५ ॥**

तं नन्दं दृष्ट्वा वृष्णयो हृष्टा उत्थिताः चिरात् बहुकालानन्तरं यज्जातं दर्शनं तेन कातरा व्याकुला गाढं यथा भवति तथा परिषस्वजिरे । उत्थाने दृष्टान्तमाह । प्रथमं मूर्च्छितास्तन्वः करचरणादयो यथा पञ्चवृत्तिकं मुख्यप्राणमागतं दृष्ट्वा उत्थिताश्चेष्टावन्तो भवन्ति तथेत्यर्थः ॥ ३२ ॥ वसुदेव इति ॥ वसुदेवस्तु कंसकृतान् बन्धनपुत्रमारणादीन् क्लेशान् तथा पुत्रयो रामकृष्णयोर्गोकुले न्यासं स्थापनं नन्दकृतां पुत्रपालनादिमैत्रीं च स्मरन् नन्दं परिष्वज्य संप्रीतः सन् प्रेम्णातिशयितेन विह्वलः व्याकुलो बभूव॥ ३३॥ कृष्णेति ॥ कृष्णरामौ तु पितरौ यशोदानन्दौ अभिवाद्य प्रणम्य परिष्वज्य च हे कुरूद्वह प्रेम्णा साश्रुः कण्ठो ययोस्तौ अतः किंचिदपि नोचतुस्तूष्णीमेवासाते । प्रथममतिद्रुतं पित्रा परिष्वक्तौ ततः पितृत्यागेऽपि सत्वरौ परिष्वज्य प्रणेमतुरिति ॥ ३४ ॥ ततः श्रीवसुदेवेनैव स्वान्तःपटगृहे प्रवेशितौ सपरिजनौ गृहीतरामकृष्णहस्तौ तौ यशोदानन्दौ गत्वा तत्र किं चक्रतुरित्यपेक्षायामाह—ताविति ॥ महाभागा यशोदा चकारान्नन्दश्च तौ द्वौ सुतौ आत्मासनं स्वाङ्कमारोप्य उपवेश्य बाहुभ्यां परिरभ्य च शुचः पुत्रविश्लेषजशो-

कान् विजहतुः तत्यजतुः । यद्वा । शुचः अश्रूणि मुमुचतुः अत्र कृष्णः मातुरङ्के उपविष्टो गोपवेष एवाभूत् ॥ ३५ ॥ ततो वसुदेवाहूते नन्दे उग्रसेनादिमेलार्थं बहिर्निर्गते रोहिणीदेवकीभ्यां यशोदामेलमाह—रोहिणीति ॥ तत्कृतां यशोदाकृतां पुत्रपालनादिरूपां मैत्रीं स्मरन्त्यौ बाष्पमानन्दाश्रु कण्ठे ययोस्ते रोहिणी देवकी चाथानन्तरं व्रजेश्वरीं यशोदां परिष्वज्य समूचतुः । रामकृष्णौ तु तत्रैव स्थितौ शृणुतः ॥ ३६ ॥ केति ॥ हे व्रजेश्वरि ऐन्द्रमैश्वर्यमवाप्यापि इह लोके यस्या मैत्र्याः प्रतिक्रिया कर्तुं न शक्यते तां अनिवृत्तां प्रत्युपकारेण निवृत्तिरहितां निवृत्तिकारणे सत्यप्यनुवर्तमानां वा वां युवयोः मैत्रीं का विस्मरेत तङार्षः ॥ ३७ ॥ तत्कृतां मैत्रीमाहतुः—एतावितिति ॥ हे भवति न दृष्टौ पितरौ याभ्यां वस्तुतः अजन्मत्वादेवादृष्टपितरौ कबभाव आर्षः तावेतौ रामकृष्णौ अक्ष्णोर्नेत्रयोरक्षकं पक्ष्म यद्वत् यथा तथा रक्षकयोर्युवयोः पित्रोर्न्यस्तौ युवाभ्यामेव सम्प्रीणनमपेक्षितप्रदानेन सन्तर्पणम् अभ्युदयः पर्वसु गोप्रदानादिमहोत्सवः पोषणं नवनीतादिभिः लालनं स्तुतिचुम्बनादिभिः एतानि संप्रीणनादीनि प्राप्य अकुत्र च भयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुर्वासं चक्रतुः । युक्तं चैतत् युवयोर्हि यस्मात् सतां परः स्व इति वैषम्यं नास्ति अत्र देवक्यभिप्रेतोर्थः स्फुट एव । यशोदायास्तु स्ववासनानु-

रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ॥ स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥ ३६ ॥ का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ॥ अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३७ ॥ एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्र च भयौ न सतां परः स्वः ॥ ३८ ॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिराद-भीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ॥ दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥३९॥ भगवांस्तास्त-थाभूता विविक्त उपसङ्गतः ॥ आश्लिष्याऽनामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४० ॥

सार्येवार्थः स्फुरति स्म स चेत्थम् । एतौ युवयोर्युवाभ्यां पितृभ्यां न्यस्तावस्मास्वर्पितौ यौ पूर्वं युवयोरेव संप्रीणनादीनि प्राप्यापि अधुना अदृष्टपितरौ अधुना युवयोः पित्रोरकृतदृष्टी सन्तौ ऊषतुरस्मासु वासं स्वीकृतवन्तौ । अत्र तादृक्सौख्याभावेऽपीति भावः । हेतुमाह नेति । सतां परः पित्रादि भिन्नः स्वःपित्रादिः इत्युक्ता रीतितीस्ति इत्युक्त्वा रामकृष्णौ तल्लालनार्थं तत्रैव त्यक्त्वा रोहिणीदेवक्यौ निष्क्रान्ते इति विज्ञेयम् ॥ ३८ ॥ ततः समीप एव व्यवहितस्थले विरहखिन्ना गोपीः वीक्ष्य रामे निष्क्रान्ते गोपीनां दशामाह—गोप्य इति ॥ यस्य श्रीकृष्णस्य प्रेक्षणे प्रवृत्ता सुदृशिषु नेत्रेषु व्यवधायकपक्ष्मकृतं विधातारं शपन्ति स्म । ताः सर्वाः गोप्यश्च चिरात् बहुकालानन्तरमभीष्टं प्रियतमं कृष्णमुपलभ्य दृष्ट्वा दृग्भिर्नेत्रद्वारैर्हृदीकृतं हृदये प्रवेशितं दीर्घ आर्षः । अलं गाढमाश्लिष्य नित्ययुजामारूढयोगिनां समाधिनिष्ठानामपि यद्वा नित्ययुजां नित्यं संयोगवतीनां रुक्मिण्यादीनामपि दुरापं दुर्लभं तद्भावं भगवदात्मतामापुः ॥ ३९ ॥ ततश्च कृष्णो मातुरुत्सङ्गादुत्थाय विविक्ते ताभिरमिलदित्याह—भगवानिति ॥ भगवांस्तास्तथाभूता आत्मभावमापन्ना गोपीर्विविक्त एकान्त उपसङ्गतः आश्लि-

ष्यानामयमारोग्यं दुःखितानां तासां हासमुत्पादयितुं प्रहसन्निदमब्रवीत् ॥ ४० ॥ अपीति ॥ हे सख्यः स्वानां पित्रादीनामर्थं प्रयोजनं कर्तुमिच्छया व्रजाद्गतान् चिरायितान् विलम्बितान् शत्रुपक्षस्य क्षपणे विनाशे चेतो येषां तान्नोऽस्मान् अपि किं स्मरथ ॥ ४१॥ अपीति ॥ अकृतज्ञा एते इति आ ईषत् सर्वतो वाविशङ्कया अपि किंस्विदस्मानवध्यायथ अवजानीथ नाऽस्माकं तत्र दोष इत्याह भूतानि प्राणिनो भगवानन्तर्याम्येव युनक्ति संयोजयति वियुनक्ति वियोजयति चेति नूनं निश्चितम् ॥ ४२ ॥ वायुरिति ॥ घनानीकं मेघसमुदायं तृणादीनि च वायुर्यथा संयोज्य आक्षिपते वियोजयति च तथा भूतकृत् विश्वस्रष्टा भगवानपि क्वचिद्भूतानि संयोज्य भूयस्तानि वियोजयति ॥ ४३ ॥ मयीति ॥ हि यस्मात् मयिभक्तिर्भूतानाममृतत्वाय अमृतत्वं मोक्षं स च मदात्मकस्तदर्थं तत्प्रापयितुं कल्पते समर्थो भवति अतो मदापनः मत्प्रापकः मत्स्नेहो भवतीनां यदासीत्तदेतत् दिष्ट्या अतिभद्रमेव जातम् ॥४४॥ कीदृशस्त्वं यं स्नेहेन प्राप्स्याम इत्यपेक्षायामाह–अहमिति ॥ हे अङ्गनाः अहमेव सर्वभूतानां जरायुजादिशरीराणां तत्कार-

अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ ४१ ॥ अप्यवध्या यथाऽस्मान्स्विदकृतज्ञा विशङ्कया॥
नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥४२॥ वायुर्यथा घनानीकं तृणं तूलं रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत्॥४३॥
मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४४ ॥ अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः ॥
भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः ॥४५॥ एवं ह्येतानि भूतानि भूतेष्वात्मात्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥४६॥
॥ श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४७ ॥

णानामाकाशादीनां च आदिः कारणम् अन्तो लयाधारश्च अन्तरम् अन्तर्यामी च बहिश्च व्यवस्थितः । यथा भौतिकानां पञ्चमहाभूतान्येवाद्यन्तरूपाणि भवन्ति अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥ ४५ ॥ ननु जरायुजादीनां भोक्ता आत्मैवाच्छन्नरूपः तत्रैव सर्वभूतानि वर्तन्त इति कुतोऽस्माकं त्वत्प्राप्तिरित्यत आह–एवमिति ॥ यथैतानि घटशरावादीनि चतुर्विधशरीराणि च भूतेषु स्वकारणेष्वाकाशादिषु एव वर्तन्ते नतु भोक्तर्यात्मनि । आत्मा जीवात्मा तु तेषु भूतेषु आत्मना भोक्तृस्वरूपेण ततः व्याप्तो वर्तते नतु कारणत्वेन उभयमपि भोग्यं भोक्तारं च जडचेतनात्मकं जगत् परे सर्वकारणभूते अक्षरे निर्विकारे मयि आभातं पश्यत ॥ ४६ ॥ अधीति ॥ अध्यात्मशिक्षया आत्मशिक्षया आत्मतत्वोपदेशेन एवं कृष्णेन शिक्षिता गोप्यस्तस्यात्मतत्वस्यानुस्मरणेनानुध्यानेन ध्वस्तो जीवकोशः कोशवदावरकमज्ञानं यासां तास्तं सर्वात्मकं भगवन्तमध्यगन् प्रापुर्ज्ञातवत्यः । मलोप आर्षः उपोद्घातोक्तरीत्या वा ॥ ४७ ॥

आहुरिति ॥ आहुश्च हे नलिननाभ अगाधः अपारो बोधो ज्ञानं येषां तैर्योगेश्वरैर्योगारूढैरपि हृदि विचिन्त्यं संसार एव दुस्तरत्वादज्ञानान्धकारव्याप्तत्वाच्च कूपस्तत्र पतितानामुत्तरणायावलम्बनभूतं ते तव पदारविन्दं गेहं जुषां द्वितीया आर्षी । तदर्हमिति ज्ञापकाद्वा । नोऽस्माकं मनसि सदा उदियात् आविर्भवेत् । अत्र श्रीदामादयो गोपा व्रज एव गोरक्षणार्थं स्थिताः अतस्तन्मेलनं न वर्णितमिति ज्ञेयम् ॥ ४८ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे द्व्यशीतितमके व्यधात् ॥ ८२ ॥ त्र्यशीतितमके कृष्णभार्याभिः स्वकरग्रहाः ॥ द्रौपद्यै कथितास्तत्र श्लोका दहनवार्द्धयः ॥ द्वादशोवाचेति पादयुक् चत्वारिंशदनुष्टुभः ॥ ८३ ॥ तथेति ॥ तथा गोपीनां गुरुरात्मतत्वोपदेष्टा गतिः फलरूपश्च भगवानेवातः यथा ताभिः प्रार्थितं तथास्त्वित्यनुगृह्याथानन्तरं युधिष्ठिरं सर्वान् सुहृदश्च प्रति अव्ययम् अहानिं कुशलमिति यावत् अपृच्छत् ॥ १ ॥ त इति ॥ ते युधिष्ठिरादयो लोकनाथेन श्रीकृष्णेनैवं कुशलं परिपृष्टाः सुसत्कृताश्च तस्य पादयोरीक्षया दर्शनेन हतं निरस्तमंहः पापं येषां ते अत एव

आहुश्च ते नलिननाभपदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलम्बं गेहं जुषामपि मनस्युदियात्सदा नः ॥ ४८ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे वृष्णिगोपसंगमो नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ श्रीशुक उवाच ॥ तथानुगृह्य भगवान्गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥ कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ॥ पिबन्ति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥ हि त्वाऽऽत्मधाम विधुतात्मकृतत्र्यवस्थमानन्दसंप्लवमखण्डमकुण्ठबोधम् ॥ कालोपसृष्टनिगमावनआत्तयोगमायाकृतिं परमहंसगतिं नताः स्मः ॥ ४ ॥

हृष्टं मनो येषां ते तं प्रत्यूचुः ॥ २ ॥ कुत इति ॥ हे प्रभो देहंभृतां देहधारिणां द्वितीया आर्षी । तदर्हमिति ज्ञापकाद्वा । देहकृच्चासावस्मृतिश्च देहकृदस्मृतिः देहसम्पादकमनाद्यज्ञानं तच्छिनत्तीति यथाभूतं देहकृदीश्वरस्तद्विषयाज्ञानं छिनत्तीति वा महतां व्यासादीनां मनसः सकाशात् मुखपङ्कजद्वारा निःसृतं त्वच्चरणाम्बुजासवम् आसववन्मादकत्वान्मधुरत्वाच्च कथामृतं क्वचिदपि ये कर्णपुटैः श्रोत्रचषकैरलं पिबन्ति तेषामशिवममङ्गलं कुतः स्यात् ॥ ३ ॥ हीति ॥ हिशब्दोऽवधारणे । आत्मधाम्ना स्वरूपप्रकाशेन विधुता निरस्ता आत्मकृता बुद्धिनिमित्तास्तिस्रो जाग्रत्स्वप्नसुषुप्तिलक्षणा अवस्था येन तम् आनन्दसंप्लवम् आनन्दप्रवाहरूपं पूर्णानन्दम् अखण्डम् अपरिछिन्नम् अकुण्ठः अप्रतिहतो बोधः चिच्छक्तिर्यस्य कालेनोपसृष्टा विप्लुता निगमा वेदास्तेषामवने निमित्ते रक्षार्थम् आत्ता परिगृहीता योगमायया निजाश्चर्यशक्त्या आकृतिर्विग्रहो येन तं परमहंसानां परमविवेकिनां गतिं प्राप्यं फलभूतं त्वा त्वामेव नताः स्मः प्रणमामः । यद्वा । आत्मधाम आत्मानं शरीरं धाम गृहं च हित्वा नताः स्मः । त्वामिति प्रकरणाल्लभ्यम् ॥ ४ ॥

इतीति ॥ उत्तमश्लोकः पुण्यकीर्तयोऽम्बरीषबलिप्रह्लादप्रभृतयस्तेषामपि शिखामणिं श्रेष्ठं श्रीकृष्णमेवं जनेष्वभिष्टुवत्सु सत्सु अन्धकादिस्त्रियः समेत्य सङ्गीभूय मिथो गोविन्दस्य कथाः अगृणन् कथयामासुः । ताश्चेदानीं त्रिषु लोकेषु गीताः प्रसिद्धाः अहं ते तुभ्यं वर्णयामि त्वं शृणु ॥ ५ ॥ हे वैदर्भीति युग्मम् ॥ हे वैदर्भि हे रुक्मिणि हे कौसले हे सत्ये शैब्ये मित्रविन्दे रोहिणीनाम भौमाहृता सुमुख्या काचित्पट्टमहिषीतुल्या हे अन्याः कृष्णपत्न्यः अच्युतो भगवान् स्वमायया लोकमनुकुर्वन् यथा वो युष्मानुपयेमे उदूढवांस्तदेतन्नोऽस्मभ्यं ब्रूत ॥ ६ ॥ ७ ॥ चैद्यायेति ॥ मा मां चैद्यायार्पयितुं राजसु शिशुपालपक्षीयेषु जरासन्धादिषु उद्यतकार्मुकेषु धृतचापेषु सत्सु अजेया ये भटास्तेषां शेखरिता मुकुटवत्कृताः अङ्घ्रिरेणवो येन स तेषां मूर्ध्नि पदं निदधत् इत्यर्थः । यः अजा अजाश्छागा अवयो वा तेषां यूथात् सिंहो यथा स्वभागं नयति तद्वत् मां निन्ये आनीतवान् । तस्य श्रीनिकेतस्य लक्ष्म्याश्रयस्य चरणो ममार्चनायास्तु ॥ ८ ॥ य इति ॥ सनाभेर्भ्रातुः प्रसेनस्य सिंहकृतेन वधेन संतप्तं हृदयं यस्य तेन ततेन

ऋषिरुवाच॥इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः॥समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते॥५॥
द्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जाम्बवति कौसले ॥ हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥ ७ ॥ रुक्मिण्युवाच ॥ चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः ॥ निन्ये मृगेन्द्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥९॥ जाम्बवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदेवं सीतापतिं त्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥

तातेन मत्पित्रा लिप्तम् आपादितमभिशापं दुर्यशोपमार्ष्टुम् अपनेतुं यः ऋक्षराजं जाम्बवन्तं जित्वा रत्नं स्यमन्तकमुपाजहार आनीतवान् । अथानन्तरं तत् मत्पित्रेऽदात् स च मम पिता तेन मिथ्याभिशापापराधेन भीतः सन् दत्तामक्रूरादिभ्यः प्रतिश्रुतामपि मां प्रभवे कृष्णाय आदिशत् दत्तवान् ॥ ९ ॥ प्राज्ञायेति ॥ देहकृत् मम पिता जाम्बवान् अमुं श्रीकृष्णं निजनाथं स्वस्वामिनं स्वकुलदैवतं च सीतापतिं प्रकर्षेण अविज्ञाय अमुना श्रीकृष्णेन सह त्रिणवहानि त्रिणवाहानि सप्तविंशत्यहानि अह्नः अलोप आर्षः । छन्दोनुरोधेन अभ्ययुध्यत् तङार्षः । "आसीत्तदाष्टाविंशाहम्" इति प्रागुक्तिस्तु समाप्तिदिनेन सहेति । ततः परीक्षितः परिक्षास्य सञ्जातेति तथा स मम पिता सीतापतिर्मम स्वाम्येवासाविति ज्ञात्वा तस्य पादौ प्रगृह्य पादग्रहणपूर्वकं प्रसाद्य मणिना सह मामर्हणमुपाहरत् सेवासाधनतया समर्पितवानित्यर्थः । अतोऽहममुष्य भगवतो दासीति इयं च श्रीरामसमय एवोत्पन्ना श्रीरामाय दित्सितापि एकपत्नीव्रतेन तेन नाङ्गीकृता इदानीं कृष्णाय दत्तेति प्रागुक्तम् ॥ १० ॥

तप इति ॥ स्वस्य भगवतः पादस्पर्शनाशया पादसंवाहनादिपरिचर्याचिकीर्षया तपः चरन्तीं कुर्वतीं मामाज्ञाय सख्या अर्जुनेन सह उपेत्य समागत्य रथेन नीत्वा यो मम पाणिमग्रहीत्तस्याहं गृहस्य मार्जनी मार्जनकर्त्र्येवास्मि ॥११॥ यो मामिति ॥ मम स्वयंवर उपेत्य आगत्य शुनां यूथगतमात्मबलिं स्वभागं द्विपारिः सिंह इव नृपान् विजित्य तथा अपकुरुतः अपकारं कुर्वतः शतुरलोप आर्षः । मे भ्रातॄंश्च विजित्य श्रियौकः लक्ष्मीपतिः इयङार्षः । यो मां स्वपुरं द्वारकां प्रति निन्ये आनीतवान् । श्रियौक इति पुरविशेषणं वा । तस्याङ्घ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वं ममानुभवं प्रति जन्म अस्तु ॥ १२ ॥ सप्तेति ॥ कृष्णाय मां दातुं क्षितिपानां राज्ञां वीर्यस्य परीक्षणाय मम पित्रा नग्नजिता कृतान् सम्पादितान् अतिशयितं बलं वीर्यं प्रभावश्च तीक्ष्णानि शृङ्गाणि च येषां तान् वीराणां दुष्टं मदं घ्नन्तीति तथाभूतान् लोकप्रसिद्धान् सप्त उक्षणः वृषभान् उभयत्र अल्लोपाभाव आर्षः । यथा शिशवो बाला बहुत्वं दार्ष्टान्तिके सप्तधा भवनात् अजतोकान् अजापत्यानि बध्नन्ति तथा तरसा झटिति निगृह्य दमयित्वा क्रीडन् अनायासे-

कालिन्द्युवाच ॥ तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाऽऽशया ॥ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी॥११॥मित्रविन्दोवाच ॥ यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनत्वम् ॥ १२ ॥ ॥ सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥ य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ॥ पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥ भद्रोवाच ॥ पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ॥ कृष्णे कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥ अस्य मे पादसंस्पर्शो भवेज्जन्मनि जन्मनि ॥ कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥

नैव बबन्ध ॥ १३ ॥ य इति ॥ यो भगवान् इत्थं वृषभदमनेन वीर्यं स्वप्रभावदर्शनमेव शुल्कं देयं द्रव्यं यस्यास्तां स्वप्रतिज्ञासिद्धौ पित्रा दत्तां मां दासीभिः सह चतुरङ्गिणीं गजादिसेनां चादाय चतुरङ्गसेनायुक्तामिति मामित्यस्य विशेषणं वा । पथि निरोधं कुर्वतो राजन्यान्निर्जित्य निन्ये द्वारकामानीतवान् तस्य दास्यं ममास्तु ॥१४॥ पितेति ॥ हे कृष्णे द्रौपदि मे मम पिता मम मातुलेयाय मातुः श्रुतकीर्तेर्भ्रातृपुत्राय कृष्णाय स्वयमेव तमाहूय अक्षौहिण्या सखीजनैश्च सह तच्चित्तां कृष्णमनस्कां मां दत्तवान् । कैकेयीं भ्रातृभिर्दत्तामिति पूर्वोक्तौ प्रतिश्रुतामिति व्याख्येयम् ॥ १५ ॥ अस्येति ॥ कर्मभिर्भ्राम्यमाणाया मे ममास्य पादसंस्पर्शः पादसंवाहनादिपरिचर्या प्रति जन्म भवेत् येन पादस्पर्शेन आत्मनो मे तत् कैवल्याख्यं श्रेयो भवेत् । यद्वा । येन हेतुना जीवात्मनः तत्तस्य पादस्पर्शनमेव श्रेयः परमं फलम् ॥ १६ ॥

ताभिः स्वस्वोद्वाहवृत्तं लज्जया संक्षेपेणोक्तं मन्वाना तत्र च द्रौपदी स्वविवाहोद्यमं प्रकृष्टं मत्वा तं कथयन्ती तमसहमाना सपत्नीनामुक्तिसमाप्त्यवकाशं प्राप्य असंकोचेन स्वोद्वाहवृत्तमाह—ममेति ॥ हे राज्ञि नारदगीतमच्युतस्य जन्म कर्म च श्रुत्वा तथा पद्महस्तया लक्ष्म्या च लोकपान् इन्द्रादीन् विहाय वृत इति कृत्वा सुसंमृश्य सम्यग्विचार्य यथा मित्रविन्दायास्तथा ममापि चित्तं मुकुन्दविषयमास । यद्वा । ममापि चित्तं मुकुन्दे आस ततः लोकपान् राज्ञो विहाय पद्महस्तया मया भगवान् वृतः ॥ १७ ॥ ज्ञात्वेति ॥ हे साध्वि मम मतम् अभिप्रायं ज्ञात्वा दुहितृवत्सलः बृहत्सेन इति ख्यातः प्रथितो मम पिता तत्र श्रीकृष्णप्राप्तावुपायमचीकरत् कारयामास ॥१८॥ यथेति॥ हे राज्ञि यथा तव स्वयंवरे पार्थेप्सया अर्जुनप्राप्तीच्छया त्वत्पित्रा मत्स्यः कृतस्तथा मत्पित्रापि कृतः । पार्थेष्वपाकृत इति पाठे पार्थेषुणापाकृतः अयं तु पार्थेप्सया कृतो मत्स्यो बहिरेवाच्छन्नो नान्तः अतः स्तम्भलग्नयोर्ध्वदृष्ट्या संलक्ष्यते मत्पित्रा कृतस्तु न तथा किंतु स्तम्भमूले निहितकलशजले केवलं दृश्यते अतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्यः । यद्वा । अयं मत्पित्रा कृतस्तु बहिः सर्वतः आच्छन्नः केवलं स जले स्तम्भस्य परितः स्थितपरिखामण्डले दृश्यते जलगर्त-

लक्ष्मणोवाच ॥ ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ॥ चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसंमृश्य विहाय लोकपान् ॥ १७ ॥ ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ॥ बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥ यथा स्वयंवरे राज्ञि मत्स्यः पार्थेप्सया कृतः ॥ अयं तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥ श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥ पित्रा संपूजिताः सर्वे यथावीर्यं यथावयः ॥ आददुः सशरं चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥ आदाय व्यसृजन्केचित्सज्यं कर्तुमनीश्वराः ॥ आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥

स्थितस्तम्भमूलस्यागम्यत्वेन साक्षाददर्शनात् स तु स्तम्भमूलादूर्ध्वदृष्ट्यादृश्यः दूरत एवावरणभेदोत्तरं तन्मात्रभेदसंकेतादेव न दुर्भेदः अयं तु सर्वज्ञं श्रीकृष्णं विना सर्वस्यापि सर्वथा दुर्भेद इति भावः ॥ १९ ॥ श्रुत्वेति ॥ एतन्मत्स्ययन्त्रनिर्माणं श्रुत्वा सर्वेषामस्त्राणां समन्त्राणां शस्त्राणां केवलानां च तत्त्वप्रयोगोपसंहारादिकं जानन्तीति तथा उपाध्यायैः शस्त्रप्रयोगादिशिक्षकैः सहिताः सहस्रशः भूपाः सर्वतो दिग्भ्यो मत्पितुः पुरमाययुः । सर्वास्त्रेत्यनेन तेषां बलादपि जिघृक्षा सूचिता ॥ २० ॥ पित्रेति ॥ मद्धियः मदेकचित्ताः ते च सर्वे मम पित्रा यथावीर्यं यथावयः वीर्यवयोनुरूपं संपूजिताः सन्तः पर्षदि सभायां मत्स्यं वेद्धुं सशरं चापं यत्पित्रा स्थापितं चापविशेषमाददुः । तङ्भाव आर्षः । मद्धिय इत्यनेन व्यग्रचित्तत्वाल्लक्ष्यवेधायोग्यता व्यङ्ग्या ॥ २१ ॥ आदायेति ॥ सज्यं कर्तुम् आरोपितज्याकं कर्तुमनीश्वरा असमर्थाः केचित् धनुरादायैव व्यसृजन् तत्यजुः । एके तु आकोटिं द्वितीयकोटौ योजयितुं ज्यां समुत्कृष्य स्थिताः अपि धनुषः योजनसामर्थ्याभावाद्धस्तादिमु-

केनामुना धनुषा हताः पेतुः । आकोष्ठमिति पाठेऽपि स एवार्थः ॥ २२ ॥ सज्यामिति ॥ अपरे मागधादयः कर्णान्तास्तु वीराः समर्था अतो धनुः सज्यं कृत्वाऽपि तस्य लक्ष्यस्यावस्थितिं नाविन्दन् तेषां क्रियाशक्तिरेव न लक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥ मत्स्येति ॥ पार्थोऽर्जुनस्तु जले मत्स्याभासं मत्स्यप्रतिबिम्बं वीक्ष्य तस्य मत्स्यस्यावस्थितिम् अवस्थानदेशं ज्ञात्वा यत्तो यत्नवान् बाणमसृजत् मुमोच । बाणस्तु मत्स्यं नाच्छिनत् परं केवलं पस्पृशे पस्पर्श । तद्भर्षः । अनेन ज्ञानशक्तिपूर्णोऽप्यर्जुनो बलेनापूर्ण इति सूचितम् ॥ २४ ॥ राजन्येष्विति युग्मम् ॥ मानिषु साहङ्कारेषु राजन्येषु मत्स्यभेदसामर्थ्याभावाद्भग्नमानेषु अत एव तद्वेधनप्रयत्नान्निवृत्तेषु च सत्सु सूर्ये च सर्वार्थसाधकेऽभिजिति मुहूर्ते स्थिते मध्याह्नसमये तदा च मत्स्योपरि सूर्य इत्यपि लक्ष्ये अवेध्येऽपि इति भावः । भगवान् कृष्णो धनुरादाय अथ लीलया अनायासेनैव सज्यं कृत्वा तस्मिन्धनुषि विशिखं बाणं सन्धाय सकृदेव जले मत्स्यं वीक्ष्य इषुणा तं छित्त्वा अपातयत् ॥ २५ ॥ २६ ॥ दिवीति ॥ जयशब्देन युता दिवि स्वर्गे देवानां दुन्दुभयो

सज्यं कृत्वाऽपरे वीरा मागधाम्बष्ठचेदिपाः ॥ भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३ ॥ मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥ २४ ॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाऽथ लीलया ॥२५॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥ दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७ ॥ तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने विनीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥ २८ ॥ उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥२९॥ तावन्मृदङ्गपटहशङ्खभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥

नेदुः हर्षेण विह्वला देवाश्च भुवि कुसुमानामासारान् वृष्टीर्मुमुचुः ॥ २७ ॥ तत्कालभवं स्वहर्षं स्मरन्ती तदा तात्त्विकं स्वयं वरणं वर्णयन्त्याह—तदिति ॥ तत्तदा विवाहोचिते नूत्ने नवीने कौशिकाग्र्ये उत्तमकौशेये वस्त्रे निवीय प्रावृत्य परिधाय च सव्रीडः सभादिव्रीडासहित आनन्दहेतुको हासो यस्मिंस्तद्वदनं यस्याः सा तथा कबर्यां धृताः स्रजो यया साहं कनकेनोज्ज्वलां रत्नमालां प्रगृह्य कलौ मधुरस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गं सभास्थानं प्राविशं प्रविष्टवत्यस्मि ॥ २८ ॥ उन्नीयेति ॥ अनुरक्तं कृष्णे आसक्तं हृदयं यस्याः साहं उरवः कुन्तला यस्मिन् कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिंस्तच्च तत्स्ववक्त्रमुन्नीय शिशिरः सन्तापहरो हासो येषु तैः कटाक्षमोक्षैरपाङ्गमोक्षणविलासैः शनकैः परितः स्थितान् राज्ञो राजन्यान् अवज्ञया निरीक्ष्य मुरारेरंसे स्कन्धे स्वमालां निदधे निहितवत्यस्मि ॥ २९ ॥ तावदिति ॥ तावत्तदा मृदङ्गादयः नेदुः ॥ ३० ॥

एवमिति ॥ हे याज्ञसेनि द्रौपदि भगवति ईशे एवं मया वृते सति स्पर्द्धन्तः स्पर्द्धमानाः आर्षः शता । हृच्छयातुराः कामपीडिताः नृपयूथपास्तन्न सेहिरे ॥ ३१ ॥ मामिति ॥ हयरत्नानाम् अश्वश्रेष्ठानां चतुष्टयं यस्मिंस्तं रथं मामारोप्य तस्मिन्निधाय सन्नद्धो बद्धकवचश्चतुर्भुजः शार्ङ्गमुद्यम्य आजौ युद्धे तस्थौ । द्वाभ्यां भीरुस्वभावाया ममालिङ्गनं द्वाभ्यां धनुर्बाणधारणमिति चतुर्भुजत्वम् ॥ ३२ ॥ दारुक इति ॥ काञ्चना उपस्करा यस्मिंस्तं रथं दारुको नाम सारथिः चोदयामास तदा च हे राज्ञि यथा क्षुद्राणां मृगाणां पश्यतामेव मृगराट् सिंहस्तान् तिरस्कृत्य स्वयं निर्भयस्तन्मध्यात्स्वभागं गृहीत्वा गच्छति तथा भूभुजां राज्ञां पश्यतामेव भगवान् मामादाय निर्जगामेति शेषः । दारुक एव वा सिंह इवताननादृत्य रथं यापयामास ॥ ३३ ॥ त इति ॥ यथा ग्रामसिंहाः श्वानो हरिं सिंहं निषेद्धुं चापवद्वक्रोद्धृतपुच्छाः प्रवर्तेरंस्तथा संयत्ताः प्रयत्नवन्त उद्धृतेष्वासा उद्धृतकार्मुकास्ते केचन राजन्या हरिं निषेद्धुं पथि मार्गे अन्वसज्जन्त पृष्ठतोऽन्वधावन् ॥ ३४ ॥ त इति ॥ शार्ङ्गधनुषश्च्युतैर्बाणसमूहैः कृत्ताः

**एवं वृते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्धन्तो हृच्छयातुराः ॥ ३१ ॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥ दारुकश्चोदयामास काञ्चनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥ ३३ ॥ तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥ ३५ ॥ ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलीं दिवि भुवि चापि संस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥ ३६ ॥ पिता मे पूजयामास सुहृत्संबन्धिबान्धवान् ॥ महार्हवासोलंकारैः शय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसङ्गनिवृत्त्याऽद्धा तपसा च बभूविम ॥ ३९ ॥**

छिन्ना बाह्वादयो येषां ते केचित्प्रधने युद्धदेशे निपेतुः एके सङ्ग्रामं सन्त्यज्य दुद्रुवुः ॥ ३५ ॥ तत इति ॥ ततः यदुपतिः अत्यलङ्कृतां रविं छादयन्तीति रविच्छदाः ध्वजेषु पटा यस्याः चित्राणि तोरणानि यस्यां सैव सा च तामिति भगवन्निवासनेन दिवि भुवि चाभिसंस्तुतां कुशस्थलीं द्वारकां पुरीं तत्रापि स्वकेतनं स्वगृहं च समाविशत् । यथा तरणिः सूर्यः स्वकेतनम् अस्ताचलं प्रविशति तद्वत् । यद्वा । तरणिर्विष्णुनामा सूर्य इव स्वकेतनं स्वमण्डलं स्वयं जाज्वल्यमानस्तत्रत्यांश्च विद्योतयन् प्रविशति तद्वत् ॥ ३६ ॥ पितेति ॥ मे मम पितामहार्हैः अनर्घ्यैर्वस्त्रादिभिः सुहृदादीन् पूजयामास ॥ ३७ ॥ दासीभिरिति ॥ दास्यादिभिः सह महार्हाणि श्रेष्ठानि आयुधानि उपायनतया पूर्णस्यावाप्तसमस्तकामस्यापि भगवतो भक्तितो ददौ ॥ ३८ ॥ एवं द्रौपदीगर्वभङ्गावेशेनात्मविवाहं वर्णयित्वा सलज्जा सती स्वज्येष्ठा रुक्मिण्याद्याः सन्तो-

षयन्त्युपसंहरति—आत्मेति ॥ इमा वयं जन्मान्तरेषु सर्वसङ्गनिवृत्त्या वैराग्येण तपसा च हेतुना तस्यात्मारामस्य निरवधिकस्वानन्दानुभवशीलस्य भगवतः अद्धा साक्षात् गृहदासिका बभूविम ॥३९॥ भौममिति॥सगणं ससैन्यं भौमं नरकं निहत्य क्षितिविजये युधि जितानां राज्ञां कन्याः तेन भौमेन रुद्धाः नऽस्मान् ज्ञात्वा ततो निर्मुच्य मोचायित्वा यः स्वयमाप्तकामोऽपि संसृतेर्विमोक्षो यस्मात् तत्पदाम्बुजमनुस्मरन्तीः नः अस्मान् परिणिनाय उपयेमे । हे साध्वि वयं साम्राज्यं सार्वभौमपदं स्वाराज्यम् ऐन्द्रपदं भौज्यं तदुभयभोगभाक्त्वम् उत अपि विविधं राजत इति विराट् तस्य भावो वैराज्यम् अणिमादिसिद्धिभाक्त्वं पारमेष्ठ्यं ब्रह्मपदम् आनन्त्यं कैवल्यं मोक्षं हरेः पदं स्वरूपं सायुज्यं न कामयामहे किं त्वेतस्य गदाभृतः श्रियः कुचकुङ्कुमस्य गन्धेनाढ्यं युक्तं श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामहे । यद्वा । बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यभौज्यस्वराज्यवैराज्यानि व्याख्येयानि ॥४०॥४१॥४२॥ व्रजस्त्रिय इति ॥ महात्मनः अत्युदारचित्तस्यात एव भक्तवात्सल्येन गावो गाश्चारयतः पादस्पर्शं गोप्याद-

महिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः ॥ ४० ॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ॥ ४१ ॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥४२॥ व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥ ४३ ॥ इति श्रीभागवते महापुराणे दशमस्कन्धोत्तरार्धे त्र्यशीतितमोऽध्यायः ॥८३॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ ज्ञानसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥

यो ग्राम्याजडाश्च यत् यथा वाञ्छन्ति तथा वयमपि कामयामहे अतोऽस्माकमपि तल्लाभः ॥ ४३ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे त्र्यशीतितमके व्यधात् ॥ ८३ ॥ चतुर्युताशीतितमे वसुदेवमखोत्सवः ॥ बन्धुप्रस्थापनाद्यं च तत्र श्लोका द्विपर्वताः ॥ देवोवाचेति पादोनाः सप्तशैला अनुष्टुभः ॥ ८४ ॥ श्रुत्वेति ॥ एवं रुक्मिण्यादीनाम् अखिलात्मनि हरौ दुःखहरे कृष्णे प्रणयानुबन्धं प्रेमपारतन्त्र्ययुक्तं वचनं श्रुत्वा अश्रुकलाभिरानन्दाश्रुबिन्दुभिराकुले व्याप्ते अक्षिणी यासां ताः सर्वाः पृथादयो विसिस्म्युः विसिष्मियिरे । इयङ्तङोरभाव आर्षः । तत्र पृथा कुन्ती सुबलपुत्री गान्धारी अथ तथा याज्ञसेनी द्रौपदी माधवी सुभद्रा अथ तथा अन्याश्च क्षितिपानां राज्ञां पत्न्यश्च उत च स्वगोप्यः कृष्णभक्ता गोप्यश्च अत्र पृथागान्धार्यादीनां वृद्धानां तु परस्परयैव श्रवणं न साक्षात् तासामग्रे द्रौपद्याः कृष्णमहिषीणां च स्वातन्त्र्येण तादृशविनोदवार्त्तया अनौचित्यात् ॥ १ ॥

इतीति ॥ इत्येवं स्त्रीभिः सह स्त्रीषु सम्भाषमाणासु नृभिः सह नृषु च सम्भाषमाणेषु सत्सु कृष्णरामदिदृक्षया तत्र मुनय आययुः ॥ २ ॥ तान्निर्दिशति—द्वैपायन इति त्रयेण ॥ रामः परशुरामः ब्रह्मपुत्राः सनकादयः अपरे निर्दिष्टेभ्योऽन्ये स्पष्टं शेषम् ॥ ३ ॥ ४ ॥ ५ ॥ तानिति ॥ प्राक् प्रथमं तत्रासीनाः नृपादयः पाण्डवादयश्च विश्ववन्दितान् तान् दृष्ट्वा प्रणेमुः ॥ ६ ॥ तानिति ॥ तान् यथास्वागतप्रश्नासनादिभिः सर्वे आनर्चुस्तथा रामेण सहितोऽच्युतः श्रीकृष्णोऽप्यर्चयत् । आडभाव आर्षः ॥ ७ ॥ उवाचेति ॥ यतवाचो मौनी भूतस्य महतो विपुलस्य तस्य सदसः सभायाः अनुशृण्वतः सतः सुखमासीनान् द्वैपायनादीन् धर्मगुप् धर्मगोप्त्री तनुर्यस्य सः भगवानुवाच ॥ ८ ॥ अहो इति ॥ आश्चर्यं वयं जन्मभृतः सफलजन्मानः तस्य जन्मनः फलं कार्त्स्न्येनास्माभिर्लब्धम् यद्यस्मात् देवानामपि दुष्प्रापं योगेश्वराणां दर्शनमस्माभिः

इति संभाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानन्दो भरद्वाजोऽथ गौतमः ॥ ३ ॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥ ४ ॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रस्तथाङ्गिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान् ॥ ६ ॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥ ८ ॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥ न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥ नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ॥ उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२ ॥

र्लब्धम् ॥ ९ ॥ किमिति स्वल्पं तपः पुण्यं येषां तेषाम् अर्चायां प्रतिमायामेव देवः देवता इति चक्षुर्बुद्धिर्येषां तेषां नृणामस्माकं वो दर्शनस्पर्शनादिकं किं कथं बभूव प्रह्वः प्रणामः ॥ १० ॥ न हीति ॥ साधून् विहाय अम्मयानि तीर्थानि सेवायोग्यानि न भवन्ति तथा मृन्मयाः शिलामयाश्च देवा अपि न सेवायोग्याः । हि यस्मात् तीर्थादय उरुकालेन सेविताः पुनन्ति साधवस्तु दर्शनादेव भक्त्याद्युपदेशेन पुनन्ति ॥ ११ ॥ नाग्निरिति ॥ बहुकालमुपासिता अग्निसूर्याद्यभिमानिनो भेदकृतः त्वं तव ममाहमिति भेदबुद्धिं कुर्वतः पुंसः अघं पापमूलमज्ञानं शीघ्रं न हरन्ति । विपश्चितो निरस्तभेदा विवेकिनस्तु मुहूर्तमात्रसेवयैव भक्तिज्ञानाद्युपदेशेनाघं घ्नन्तीति तारका ग्रहादिरूपाः "यो वाचं ब्रह्मेत्युपास्ते मनो ब्रह्मेत्युपास्ते" इति श्रुतेर्वाङ्मनसयोरप्युपासनाविषयत्वम् ॥ १२ ॥

यस्येति ॥ यस्य प्राणिनः त्रिधातुके वातपित्तश्लेष्माणः त्रयो धातवः प्रकृतयो यस्य तस्मिन् अत एव कुणपे शवतुल्ये जडे शरीरे आत्मबुद्धिः अहमिति बुद्धिः कलत्रपुत्रादिषु स्वधीः स्वकीया इति बुद्धिः भौमे भूविकारे प्रतिमायाम् इज्यधीः देवताबुद्धिः तथा यत् यस्य सलिले तीर्थबुद्धिः अभिज्ञेषु तत्त्वज्ञेषु जनेषु ता बुद्धयः कर्हिचिदपि न भवन्ति तथा तथा बुद्ध्या तत्सम्माननं न करोति स गोष्वपि खरः दारुणः । यद्वा । गौश्चासौ खरश्च एक एव पशुद्वयतुल्यः सिन्धुदेशे गोखराकारो निरर्थः पशुरप्यस्ति । क्वचित् म्लेच्छविशेषोऽपि । यद्वा । गवां तृणादि भारवाहकगर्दभतुल्य एव भक्तास्तु प्राहुः अत्र भौमे भगवत्प्रतिमाभिन्ने जले च गङ्गायमुनादिभिन्ने इति व्याख्येयम् । अर्चायामेव हरये इत्यादौ अभिज्ञेष्विज्यबुद्ध्यभावेऽपि कनिष्ठभक्तत्वोक्तेः । गङ्गादिजलेष्वपि तादृशवचनसहस्रात् ॥ १३ ॥ निशम्येति ॥ एवंभूतं भगवतः अकुण्ठमेधसः अप्रतिहतबुद्धेः कृष्णस्य दुरन्वयं सर्वोत्कृष्टस्यापि स्वस्यापकर्षपरत्वादननुरूपं वचनं निशम्य भ्रमद्धियस्ते विप्रास्तूष्णीमासन् ॥ १४ ॥ चिरमिति ॥ ततश्च ते मुनयः

यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥ श्रीशुक उवाच ॥ निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन्भ्रमद्धियः ॥ १४ ॥ चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसङ्ग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥ यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायतिगूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥ अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥

चिरं विमृश्य विचार्य ईश्वरस्यापीशितव्यतां मुनिसेवकतामन्येऽप्येवं कुर्युरिति जनसंग्रहायेति निश्चित्य स्मयन्तः विस्मयं कुर्वन्तश्शतार्षः तं जगद्गुरुं श्रीकृष्णं प्रत्यूचुः ॥ १५ ॥ यदिति ॥ विश्वसृजां दक्षकश्यपादिप्रजापतीनामप्यधीश्वराः तत्वोपदेशेन नियन्तारः तत्वविदां मध्ये उत्तमा अपि वयं यस्य मायया मोहितास्तदभिप्रायं न जानीमः । ईहया मनुष्यचेष्टया गूढः सन् यत् ईशितव्यायति भवान् सेवकवदाचरति आचारे क्यङ् तङभाव आर्षः । तस्य भगवतो विचेष्टितमहो विचित्रम् अतिदुर्ज्ञेयम् ॥ १६ ॥ अनीह इति ॥ ईहा इच्छा भोगासक्तिः चेष्टा वा तद्रहितोऽपि निरासक्तिर्निष्क्रियो वापि स्वयमेकोऽपि यः आत्मना उपादानभूतेन साधनभूतेन चैतत् जगद्बहुधा सृजति अवति रक्षति अत्ति संहरते च तथापि न बध्यते मया कृतं ममेदमित्यहङ्काराभावात्तत्तत्कर्मणा जीववद्बन्धनं न प्राप्नोतीत्यर्थः । भौमैः स्वकार्यैर्घटादिभिर्भूमिर्यथा बहुनामरूपिणी भवति तथेति तस्य विभूम्नो महत्तमस्येदं मनुष्यभावस्वीकारेण ब्राह्मणसम्माननादिचरितमहो विडम्बनम् अत्यनुकरणमात्रं नतु तत्त्वमित्यर्थः ॥ १७ ॥

अथापीति ॥ यद्यपि भवान् परः पुरुषः पुरुषोत्तमोऽतस्तव कर्मबन्धनरहितस्याप्तकामस्य स्वप्रयोजनाभावाज्जन्मादि न सम्भवति तथापि स्वजनानां स्वभक्तानामभिगुप्तये परि-त्राणाय खलानां दुष्कृतानां निग्रहाय च काले तत्तदवसरे सत्वं शुद्धसत्वमयं वपुर्बिभर्षि तथा वर्णाश्रमाभिमानी सन् लोकशिक्षार्थं स्वलीलया स्वाचारेण सनातनं वेदपथं च बिभर्षि वेदोक्तानि कर्माणि चानुतिष्ठसि ॥ १८ ॥ ब्रह्मेति युग्मम् ॥ यत्र ब्राह्मणकुले व्यक्तं कार्यम् अव्यक्तं कारणं सत् सत्तामात्रं ततः कार्यकारणतः परं ब्रह्म चोपलब्धं भवति तत् तपःस्वाध्यायसंयमैः शुक्लं शुद्धं तद्ब्रह्म ब्राह्मणकुलं यस्मात् शास्त्रं वेद एव योनिः प्रमितिकारणं यस्मिंस्तस्य ते तव हृदयम् अन्तरङ्गं तस्मादेव हे ब्रह्मन् तदात्मनः सत् धाम उपलब्धिस्थानं ब्रह्मकुलं त्वं सभाजयसि संपूजयसि तत्तस्माद्ब्राह्मणसंमानात् भवान् ब्रह्मण्यानामग्रणीर्मुख्यः ॥ १९ ॥ २० ॥ अद्येति ॥ सतां गत्या त्वया सङ्गम्य सङ्गं प्राप्य नोऽस्माकमद्य जन्मनः साफल्यं जातं तथा विद्यायास्तपसो दृशो नेत्रस्य अपरोक्षज्ञानस्य वा साफल्यं जातम् । यत् यस्मात् त्वत्सङ्ग एव श्रेयसां परोन्तः

अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥१८॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥ तस्माद्ब्रह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि तद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥ अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः ॥ त्वया संगम्य सद्गत्या यदन्तः श्रेयसां परः ॥ २१ ॥ नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ॥ स्वयोगमायया च्छन्नमहिम्ने परमात्मने ॥ २२ ॥ न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥ यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ॥ नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥ २४ ॥ एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया ॥ मायया विभ्रमच्चितो न वेद स्मृत्युपप्लवात् ॥ २५ ॥

परमावधिः अत उत्तमं फलान्तरं नास्तीत्यर्थः ॥ २१ ॥ नम इति ॥ तस्मै भगवते अकुण्ठमेधसे अप्रतिहतचिच्छक्तये स्वयोगमायया अचिन्त्यशक्त्या छन्नो गूढो महिमा ऐश्वर्यं यस्य तस्मै परमात्मने अन्तर्यामिणे कृष्णाय नमः ॥ २२ ॥ नेति ॥ मायैव जवनिका तिरस्करिणी तया च्छन्नं सर्वात्मानं कालं सृष्ट्यादिनिमित्तम् ईश्वरं सर्वनियन्तारं यं त्वाम् अमी भूपाः एकस्मिन्नेव स्थाने भगवता सह आरामः भोजनशयनादिभिः सहवासो येषां ते वृष्णयश्च न विदन्ति ॥ २३ ॥ यथेति ॥ यथा गुणं गुणकार्यं देहं तत्वमात्मतत्वतया पश्यतीति गुणतत्वदृक् पुरुषः शयानः स्वमान् पश्यन् नाममात्रं मिथ्याभूतमेवेन्द्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमेवात्मानं वेद तदाकाररहितं परं ततो भिन्नं देवदत्तादिरूपं न वेद ॥ २४ ॥ एवमिति ॥ विषयेष्विन्द्रियैर्या ईहा प्रवृत्तिः सैव माया तया विभ्रमच्चितं यस्य सः अत एव स्मृतेर्विवेकस्योपप्लवो नाशस्तस्मात् हेतोर्नाममात्रेषु स्वप्नादितुल्येष्वपि देहादिषु सन्तमपि त्वां स्वात्मानं न वेद किंत्वेवं स्वप्नवद्देहादिकमेवात्मानं मन्यते ॥ २५ ॥

तस्येति ॥ अघौघस्य पापसमूहस्य मर्षो नाशो यस्मात्तत्तीर्थं यद्गङ्गारूपं तस्यास्पदं तीर्थत्वकारणमित्यर्थः तीर्थास्पदमिति भिन्नपदपाठो वा । तथा सुपक्वयोगैरपि योगिभिर्हृदि कृतं चिन्तितं तस्य परमपुरुषार्थरूपस्य पुरुषोत्तमस्य ते तवाङ्घ्रिमद्य वयं ददृशिम दृष्टवन्तः अतो वयं कृतार्था इति शेषः । यस्य चरणस्योत्सिक्तया वृद्धया भक्त्या उपहतः निवृत्तः उपहृत इति पाठे समर्पितः । आशयोन्तःकरणरूपो जीवकोशो जीवावरकरूपो येषां ते एव भवद्गतिं फलभूतं भवन्तमापुः अथो तस्मात् अस्मान् भक्तान् कृत्वा अनुगृहाण अनुग्रहपूर्वकं गमनाज्ञां देहि ॥ २६ ॥ इतीति ॥ इत्येवं दाशार्हं श्रीकृष्णं धृतराष्ट्रं युधिष्ठिरं चानुज्ञाप्य गमनानुज्ञां पृष्ट्वा हे राजर्षे मुनयः स्वाश्रमान् गन्तुं मनो दधिरे ॥२७॥तदिति॥ तन्मुनीनां गमनोद्योगं वीक्ष्य महायशा वसुदेवस्तानुपव्रज्य समीपं गत्वा प्रणम्य उपसंगृह्य पाणिभ्यां चरणौ गृहीत्वा सुयन्त्रितः एकाग्रचित्त इदं वक्ष्यमाणं बभाषे सन्धिरार्षः। बभाष इति तङभाव आर्षो वा ॥२८॥ नम इति ॥ "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः। सर्वे देवा येषु तेभ्यः ऋषिभ्यो वो युष्मभ्यं

तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गन्तुं मुनयो दधिरे मनः ॥ २७ ॥ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृह्य बभाषेदं सुयन्त्रितः ॥ २८ ॥ वसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २९ ॥ नारद उवाच ॥ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम् ॥ गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यो याति शुद्धये ॥ ३१ ॥ यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥ तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥

नमः । हे ऋषयः मद्वचनं श्रोतुमर्हथ योग्याः स्थ येन कर्मणा यथानुष्ठितेन वा कर्मणा कर्मणां निर्हारो निरासः स्यात्तन्नोऽस्मान् प्रति उच्यताम् ॥ २९ ॥ नेति ॥ हे विप्राः कृष्णम् अर्भकं स्वपुत्रम् अज्ञं मत्वा तं विहाय वसुदेव आत्मनः स्वस्य श्रेयःसाधनं बुभुत्सया बोद्धुमिच्छया यन्नोऽस्मान् पृच्छति तदेतदतिचित्रं न भवति ॥ ३० ॥ सन्निकर्ष इति ॥ हि यस्मात् मर्त्यानां सन्निकर्षो निरन्तरं सान्निध्यमनादरस्य गौरवमननाभावस्य कारणं भवति अतो नित्यकृष्णसन्निधानात्तमनादृत्यास्मान् पृच्छतीत्याशयः । यथा तत्रत्यो गङ्गातीरस्थो जनो गाङ्गम् अम्भो हित्वा अनादृत्यात्मनो विशुद्ध्यर्थम् अन्यतीर्थाम्भः प्रतियाति तथेति ॥३१॥ यस्येति युग्मम् ॥ यस्येश्वरस्य अनुभूतिः प्रकाशस्वरूपलक्षणा कालेन कर्कटिकाफलवत् तथा अस्य विश्वस्य लयोत्पत्त्यादिना स्वतश्च विद्युदादिवत् अन्यस्माच्च मुद्गरादेर्घटादिवत् गुणतो रूपाद्यन्तरोत्पत्तेः पूर्वरूपादिना देहादिवत्

कुतश्चिदपि न नरिष्यति न नश्यति लयोत्पत्त्योरादिना कारणेनेति कालविशेषणं वा । एवं यथा जीवानां ज्ञानं कालादिना नश्यति तथा अविद्यास्मिता रागद्वेषाभिनिवेशाः पञ्च क्लेशाः तन्निमित्तकानि कर्माणि पुण्यपापात्मकानि तत्परिपाकः फलं च सुखदुःखात्मकं गुणानां सत्वादीनां प्रवाहः पर्यायेण पुनः प्रादुर्भावः तैः क्लेशादिभिरव्याहतानुभवमद्वितीयमीश्वरमपि अन्यः अन्यो जनः स्वदृष्टान्तेन स्वविभवैः प्राणमनोबुद्धिभिर्लिङ्गशरीरवटकैः स्वकार्यैः प्राणादिभिर्गूढमाच्छन्नं मन्येत मन्यते । यथा मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैर्गूढं सूर्यमिवेति मेघस्य सौरज्योतिर्जलात्मकत्वात् जलस्य ज्योतिः कार्यत्वात् हिमस्य च जलविशेषत्वात् राहोर्ध्वान्तखण्डरूपत्वात् ध्वान्तस्य च चक्षुर्ग्राह्यत्वेन पौराणिकमते तैजसत्वात् मेघादीनां सूर्यकार्यत्वम् ॥ ३२ ॥ ३३ ॥ अथेति ॥ अथ हे राजन् सर्वेषां राज्ञां शृण्वतां सतां तथा रामकृष्णयोरपि शृण्वतोः सतोः आनकदुन्दुभिमाभाष्य सम्बोध्य मुनय ऊचुः ॥ ३४ ॥ कर्मणेति ॥ यच्छ्रद्धया मखैर्यज्ञेश्वरं यज्ञफलदातारं विष्णुं यजेत् आराधयेदित्येष एव कर्मणा कर्मनिर्हारः कर्मनिवृत्त्युपायः साधु यथा तथा निरूपितः ॥ ३५ ॥ चित्तस्येति ॥ आत्मनोन्तःकरणस्य मुदमावहति तथा सः चित्तस्योपशमः शान्तिकरः क्षत्रियाणां धर्मश्च शास्त्रमेव

अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् ॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४ ॥ कर्मणा कर्मनिर्हार एष साधु निरूपितः ॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३५ ॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३६ ॥ अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३७ ॥ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥ ३८ ॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥

चक्षुस्तेन कविभिर्विवेकिभिः सुगमः प्रवृत्त्यात्मकत्वात्सुकरो योग उपायोऽयमेव दर्शितः ॥ ३६ ॥ अयमिति ॥ यद्यपि सन्ति तपआदयोऽन्येऽप्युपायास्तथापि द्विजातेस्त्रैवर्णिकस्य गृहाश्रमिणः स्वस्त्ययनः श्रेयःप्रापकोऽयमेव यत् श्रद्धया शुक्लेन शुद्धेन आप्तेन वित्तेन पूरुषः भगवान् इज्येत इति ॥ ३७ ॥ निष्कामत्वं विना कर्मनिर्हारो न स्यात् निष्कामत्वं चानेन प्रकारेण—वित्तेति ॥ वित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् सम्पादितयज्ञेषु दानेषु किमतः परं वित्तेनेति भावयेत् गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां स्त्रीभोगवासनां पुत्रवासनां च विसृजेत् तद्वैरस्यानुभवेनैव तदौत्सुक्यनिवृत्तेः । आत्मनः स्वर्गादिलोकैषणां च देवकालेन देवानामपि मृत्युहेतुभूतकालानुसन्धानेन देव हे वसुदेव कालेन क्षयाद्यनुसन्धानेन वा बुधो विवेकी विसृजेत् परित्यजेदित्यर्थः ॥ ३८ ॥ ग्रामे इत्यर्द्धम् ॥ धीरा विवेकिनः सर्वे ग्रामे गृहे त्यक्तैषणाः सन्तस्तपोवनं ययुरिति । ऋणैरिति ॥ हे प्रभो यज्ञानुष्ठाने समर्थ द्विजस्त्रैवर्णिको देवादीनां त्रिभिर्ऋणैः सह जातो जायते अतः क्रमेण यज्ञाध्ययनपुत्रैस्तानि देवर्षिपितॄणामृणान्यनिस्तीर्यानपाकृत्य

गृहकर्मादि त्यजन् नरके पतेत् ॥ ३९ ॥ त्वमिति ॥ हे महामते द्वाभ्यामृषिपित्रोः ऋणाभ्यां तु त्वमद्य मुक्तः वेदाध्ययनपुत्रोत्पादनयोः कृतत्वात् अतो यज्ञैर्देवर्णमुन्मुच्यापाकृत्य निर्ऋणः सन्नशरणो भव गृहादिकं परित्यज ॥ ४० ॥ लोकरीत्या प्रश्नस्य लोकरीत्यैवोत्तरमस्माभिर्दत्तं वस्तुतः अविशुद्धचित्तानामेवायं क्रमः त्वं तु कृतार्थ एवेत्याहुः—वसुदेवेति ॥ हे वसुदेव भगवान्नूनं परमया प्रेमलक्षणया भक्त्या जगतामीश्वरं हरिं प्रार्चः अर्चितवान् । यत् यस्मात् स हरिः वां युवयोः पुत्रतां गतः ॥ ४१ ॥ इतीति ॥ इत्येवंभूतं तेषां वचनं श्रुत्वा महामनाः हृष्टचित्तो वसुदेवस्तानेव ऋषीन् मूर्ध्ना आनम्य प्रसाद्य च प्रसन्नान् कृत्वा ऋत्विजो वव्रे वृतवान् ॥ ४२ ॥ त इति ॥ हे राजन् ते ऋषय एवं धर्मेण यथाविधि वृतास्तस्मिन् स्यमन्तपञ्चके क्षेत्रे उत्तमकल्पकैर्मन्त्रतन्त्रद्रव्यादिसम्पन्नैर्मखैस्तं धार्मिकं वसुदेवमयाजयन् ॥ ४३ ॥ तदिति युग्मम् ॥

त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥ ४० ॥ वसुदेव भवान्नूनं भक्त्या परमया हरिम् ॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥ श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥ ४२ ॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ॥ ४४ ॥ तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥ नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकण्ठ्यो गन्धर्व्यः संगीतं सहभर्तृकाः ॥ ४६ ॥ तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥ ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥

हे राजन् तस्य यज्ञस्य दीक्षायां संप्रवृत्तायां सत्यां पुष्करस्रजः स्नाताः सुवाससः सुष्ठ्वलङ्कृताः वृष्णयः राजानः तथा मुदिताः निष्ककण्ठ्यः सुवाससः चन्दनादिभिरालिप्ताः वस्तूनि अर्हणानि पाण्योर्यासां ताः तस्य वसुदेवस्य महिष्यः पत्न्यश्च दीक्षाशालां यज्ञशालाम् उपाजग्मुः ॥४४॥४५॥ नेदुरिति सार्द्धम् ॥ मृदङ्गादयो नेदुः नटनर्तक्यो ननृतुः सूतमागधास्तुष्टुवुः सहभर्तृकाः सुकण्ठ्यो गन्धर्व्यः सङ्गीतं जगुः॥४६॥ तमिति ॥ अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेन लिप्तम् अष्टादशभिः पत्नीभिः सहितं तं वसुदेवम् ऋत्विजो विधिवदभ्यषिञ्चन् । यथा पुरा उडुभिः नक्षत्रैः सहितं सोमराजं चन्द्रमभ्यषिञ्चंस्तथा बहूनां सोमानां यदि कोऽप्येकोऽप्यधिकतेजा राजा भवति तमिवेत्यर्थः ॥४७॥ ताभिरिति ॥ स च दुकूलादिभिरन्यैश्च विभवैरलङ्कारैः सुष्ठ्वलङ्कृताभिः पत्नीभिः सह दीक्षितः अजिनेन मृगचर्मणा संवृतश्च विरेजे बभौ इत्यपि पाठः ॥४८॥

तस्येति ॥ हे महाराज सदस्याः सभ्यैः सहिताः रत्नकौशेयवाससस्तस्य वसुदेवस्य ऋत्विजो विरेजुः । तत्र दृष्टान्तमाह यथेति । वृत्रासुरहननानन्तरम् इन्द्रस्य यज्ञे यथा तस्य ऋत्विजो विरेजुस्तथा ॥ ४९ ॥ तदेति ॥ तदा स्वैः स्वैः बन्धुभिः तथा स्वविभूतिभिः स्वांशभूतैः सुतैर्दारैश्च अन्वितौ जीवानामीशौ रामकृष्णौ च रेजतुः ॥ ५० ॥ ईजे इति ॥ आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयस्तेभ्यश्चोदनालिङ्गादिभिः प्रकृतिवद्विकृतिः कर्तव्येति अतिदेशप्राप्ताङ्गाः वैकृताः सौरसत्रादयस्तैः सर्वैरेवाग्निहोत्रादिनामकैश्च द्रव्यं पुरोडाशादि ज्ञानं मन्त्रः क्रिया कर्म तेषामीश्वरं भगवन्तं विधिना अनुयज्ञं प्रतियज्ञमीजे इष्टवान् ॥ ५१ ॥ अथेति ॥ अथ स वसुदेवः काले तदवसरे स्वलङ्कृतेभ्योऽपि ऋत्विग्भ्यः स्वयमप्यलङ्कृत्य यथाम्नातं यथोक्तं दक्षिणाः तथा महान्ति धनानि यासु ताः स्वलङ्कृता गोभूकन्याश्चाददात् ॥ ५२ ॥ पत्नीति ॥ पत्नीसंयाजो यागविशेषश्च आवभृथ्यान्यवभृथकृत्यानि तैश्चरित्वा तान्यनुष्ठाय ते महर्षयः ऋत्विजो यजमानः पुरःसरो येषां ते विप्रा रामह्रदे परशुरामनिर्मिते ह्रदे सस्नुः

तस्यर्त्विजो महाराज रत्नकौशेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥ अथर्त्विग्भ्योऽददात्काले यथाम्नातं सदक्षिणाः ॥ स्वलंकृतेभ्यो विप्रेभ्यो गोभूकन्या महाधनाः ॥ ५२ ॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥ ५३ ॥ स्नातोऽलंकारवासांसि बन्दिभ्योऽदात्तथा स्त्रियः ॥ ५४ ॥ ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥ बन्धून्सदारान्ससुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृञ्जयान् ॥५५॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥ ५६ ॥ धृतराष्ट्रोऽनुजः पार्थो भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्व्यासः सुहृत्संबन्धिबान्धवाः ॥ ५७ ॥ बन्धून्परिष्वज्य यदून्सौहृदाऽऽक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८ ॥

॥५३॥ स्नात इति अर्द्धम् ॥ स्नातो वसुदेवो बन्दिभ्योऽलङ्कारवासांस्यदात् तथा तस्य स्त्रियोऽपि स्नाता वस्त्रादिकं तेभ्यो ददुः ॥५४॥ तत इति सार्द्धयुग्मम् ॥ ततः स्वलङ्कृतो वसुदेवः शुनोऽभिव्याप्य सर्वानेवान्नेन पूजयत् अपूजयत् अडभाव आर्षः । तथा सदारान् ससुतान् बन्धून् विदर्भादीन् चारणान्तान् भूयसा पारिबर्हेण सम्मानार्थं देयबहुद्रव्येण अपूजयत् ते च सर्वे श्रीनिकेतं लक्ष्मीपतिं श्रीकृष्णमनुज्ञाप्य तदनुज्ञां पृष्ट्वा क्रतुं भगवन्तं च प्रशंसन्तो द्रुतं शीघ्रं स्वाश्रमान् ययुः ॥ ५५ ॥ ५६ ॥ धृतराष्ट्र इति ॥ अनुजो विदुरः पार्था युधिष्ठिरभीमार्जुनाः पृथा कुन्ती यमौ नकुलसहदेवौ सुहृदो मित्राणि संबन्धिनो मातुलश्वशुरादयो विवाहादिना संबद्धाः बान्धवाः गोत्रिणः एतेऽपि ययुः स्पष्टाः शेषाः ॥५७॥ बन्धूनिति ॥ सौहृदेन स्नेहेन आक्लिन्नं चेतो येषां तान् बन्धून् यदून् परिष्वज्य विरहकृच्छ्रेण स्वदेशं ययुः । तथा परे च जनाः ययुः ॥५८॥

नन्द इति ॥ कृष्णादिभिः गोपालैः सह बृहत्या महत्या पूजया अन्नवस्त्राद्यपेक्षितया समृद्ध्या अर्चितः सत्कृतः बन्धुवत्सलः नन्दः तत्र न्यवात्सीत् ॥ ५९ ॥ वसुदेव इति ॥ सुहृद्वृतः वसुदेवस्तु यज्ञविषयकमनोरथ एव महार्णवस्तमञ्जसा अनायासेनैवोत्तीर्य अतः प्रीतं मनो यस्य सः करे स्पृशन् करं गृहीत्वा नन्दमाह ॥ ६० ॥ भ्रातरिति ॥ स्नेहसंज्ञितो यो नृणां पाशः स ईशकृतः अतः तमहं शूराणां बलिनामपि दुर्भिदं योगिनां ज्ञानिनामपि च दुस्त्यजं मन्ये ॥ ६१ ॥ अस्मास्विति ॥ यत् यस्मात् कृतमुपकारं न जानन्तीति कृताज्ञास्तेष्वस्मासु सत्तमैर्भवद्भिरकल्पा अनुपमा इयं पुत्रपालनादिस्नेहरूपा मैत्र्यर्पिता कृता अफलाऽपि प्रत्युपकाररहितापि कर्हिचित् न निवर्तेत अधुनाऽपि न निवर्तते । तस्मादीश्वरकृत एवायं भवतां स्नेहरूपः पाश इति निश्चयः ॥ ६२ ॥ अफलत्वमाह—प्रागिति ॥ हे भ्रातः प्राक् कंसकृतबन्धनदशायाम् अकल्पात् सामर्थ्याभावादेव वो युष्माकं कुशलं प्रियं नाचरामहि न कृतवन्तः तङार्षः । अधुना तु श्रीमदेनान्धे अक्षिणी येषां ते वयं पुरः सतः अग्रे विद्यमानानपि युष्मान् न

नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥ ५९ ॥ वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ॥ सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥ ६० ॥ वसुदेव उवाच ॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ॥ तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥ अस्मास्वप्रतिकल्पेयं यत्कृताऽज्ञेषु सत्तमैः ॥ मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥ ६२ ॥ प्रागकल्पाच्च कुशलं भ्रातर्वो नाचरामहि ॥ अधुना श्रीमदान्धाक्षा न पश्याम पुरः सतः ॥ ६३ ॥ मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ॥ स्वजनानुत बन्धून्वा न पश्यति ययान्धदृक् ॥६४॥ श्रीशुक उवाच ॥ एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ ६५ ॥ नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ॥ अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥

पश्याम किं पुनर्दूरस्थान् ॥ ६३ ॥ मा इति ॥ हे मानद श्रेयस्कामस्य परमपुरुषार्थमिच्छतः पुंसः राज्यश्रीर्मा भूदिति प्रार्थना । अडागमश्छान्दसः । कुतः यया श्रिया अन्धदृक् लुप्तविवेकः पुमान् कृतोपकारान्स्वजनादीन् न पश्यति तत्प्रत्युपकारं न करोति ततः कृतघ्नतादोषेण नरके पततीत्याशयः ॥ ६४ ॥ एवमिति ॥ एवं सौहृदेन प्रेमातिशयेन शैथिल्यं यस्य तच्चित्तं यस्य सः अत एवाश्रूणि विलोचनयोर्यस्य सः आनकदुन्दुभिस्तत्कृतां पुत्रपालनादिमैत्रीं स्मरन् रुरोद । अत्र प्रेमभक्ताः । श्रीकृष्णे स्वपुत्रत्वं व्यञ्जयन्तं वसुदेवं नन्दो न किंचित्प्रत्युवाच न च तस्य श्रीकृष्णे स्वपुत्रत्वाभावसंदेहोऽपि । स्वपुत्रस्य श्रीकृष्णस्य दारसुतादिवैभवैश्चान्तः परमसन्तुष्टो बहिर्वसुदेवोक्तानुसारमेव व्यवजह्रे ॥ ६५ ॥ नन्द इति ॥ नन्दस्तु सख्युर्वसुदेवस्य रामकृष्णयोश्च प्रेम्णा तेषां प्रियं कर्तुम् अद्य श्व इति अद्य निर्गमे अद्यैवापराह्णे गम्यतामिति अपराह्णे निर्गमे श्वो गम्यतामिति पुनः पुनर्यदुभिर्मानितः त्रीन् मासान् अवसत् ॥ ६६ ॥

तत इति युग्मम् ॥ ततो वसुदेवादिभिर्यापितः महासैन्येन प्रस्थापितो ययौ। स्पष्टं शेषम् ॥ ६७ ॥ ६८ ॥ नन्द इति ॥ नन्दादयो गोपाः गोविन्दचरणाम्बुजे क्षिप्तं निहितं मनः पुनर्हर्तुं ततो वियोजयितुमनीशा असमर्थाः सन्तो मथुरां मथुरामण्डलस्थं व्रजं ययुः। अत्र शत्रुपक्षक्षपणकार्यस्यावशिष्टत्वमपदिश्य कृष्णो न ययाविति दन्तवक्त्रवधानन्तरन्तु कृष्णो गमिष्यति इति प्रागुक्तम् ॥ ६९ ॥ बन्धुष्विति ॥ एवं बन्धुषु सर्वेषु प्रतियातेषु प्रस्थितवत्सु कृष्ण एव देवता येषां ते वृष्णयः प्रावृषं वर्षर्तुमासन्नां संनिहितां वीक्ष्य ज्ञात्वा कृष्णाज्ञया पुनर्द्वारवतीं ययुः ॥ ७० ॥ जनेभ्य इति ॥ तीर्थयात्रायां यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञमहोत्सवं तथा यच्च सुहृत्संदर्शनादिकमासीत्तत्सर्वं द्वारकावासिभ्यो जनेभ्यः कथयांचक्रुः ॥ ७१ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे चतुरशीतितमे व्यधात् ॥ ८४ ॥ पञ्चाशीतितमे दाता ज्ञानं पित्रे बलाच्युतौ ॥ मात्रे पूर्वं मृतान्पुत्रान् अत्र श्लोका नवेषवः ॥ नैवोवाचेति वाक्यानि चर्तुःषष्टिरनुष्टुभः ॥ ८५ ॥ अथेति ॥ अथ कुरुक्षेत्रयात्रा-

ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः ॥ परार्घ्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ ६७ ॥ वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥ नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे ॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥ बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ॥ वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥ ७० ॥ जनेभ्यः कथयाञ्चक्रुर्यदुदेवमहोत्सवम् ॥ यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम् ॥ ७१ ॥ इति श्रीभागवते म० दशमस्कन्धे उत्तरार्धे तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ श्रीबादरायणिरुवाच ॥ अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ ॥ वसुदेवोऽभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥ मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ॥ तद्वीर्यैर्जातविश्रम्भः परिभाष्याभ्यभाषत ॥ २ ॥ कृष्ण कृष्ण महायोगिन्सङ्कर्षण सनातन ॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥ स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥

नन्तरम् एकदा कदाचित्प्रातर्नित्यवन्दनसमये प्राप्तौ स्वसमीपमागतौ आत्मजौ अत एव कृतं पादाभिवन्दनं याभ्यां तौ सङ्कर्षणाच्युतौ रामकृष्णौ प्रीत्या आशीर्भिरभिनन्द्य वसुदेव आह स्म ॥ १ ॥ मुनीनामिति ॥ पुत्रयोर्धामसूचकं परमेश्वरत्वज्ञापकं मुनीनां वचः स्मृत्वा तथा तयोर्वीर्यैर्गोवर्द्धनोद्धरणादिभिर्जातो विश्रम्भः जगदीश्वरत्वविश्वासो यस्य स वसुदेवः परिभाष्य तौ सम्बोध्य अभ्यभाषत ॥ २ ॥ कृष्णेति ॥ हे कृष्ण कृष्ण महायोगिन् हे सङ्कर्षण सनातन अस्य विश्वस्य यत् यौ साक्षात् स्वरूपेण कारणभूतौ प्रधानपुरुषौ तयोरपि परौ कारणरूपौ साक्षात् परमेश्वरौ वां युवामिति जाने ॥ ३ ॥ यत्रेति ॥ यत्र यस्मिन्नधिकरणे इदं विश्वं स्यात् येन कर्त्रा करणेन चेदं स्यात् यतो वा अपादानसंज्ञकादुपादानकारणादिदं स्यात् यस्य संबन्धि यत्स्वामिकमिदं स्यात् यस्मै संप्रदानाय यद्विहारार्थमिदं स्यात् यत् यः प्रयोज्यकर्ता यच्च कर्म यद्यदिति

देवानमृतमाशयतीत्यादिकयोः प्रयोज्यकर्मशुद्धकर्मणोः संग्रहः। ननु प्रयोज्यभिन्नं शुद्धं कर्म नास्त्येव तण्डुलं पचति इत्यादौ तण्डुलः पक्को भवति तं पक्कं करोतीत्याद्यर्थात् तदुक्तम्। करोतिः क्रियमाणेन न कश्चित्कर्मणा विना भवत्यर्थस्य कर्त्ता च करोतेः कर्म जायते इति करोत्यर्थस्य यः कर्त्ता भवितुः स प्रयोजकः भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यत इति सत्यम्। अवस्थाभेदेन भेदसद्भावात् तण्डुलः पक्को भवतीत्यादौ हि तण्डुल ओदनो भवति तं तण्डुलम् ओदनं करोति इत्यर्थे न पूर्वावस्थतण्डुलादेः प्रयोज्यकर्मत्वात् उत्तरावस्थौदनादेः शुद्धकर्मत्वात् दृश्यते चावस्थया भेदः तण्डुलानोदनं पचति मृदं घटं करोतीति तदेवं सप्त विभक्त्यर्था दर्शिताः। यथा येन प्रकारेणेति क्रियाविशेषणानां यद्वा स्यादिति तत्तत्कालशक्तेः सङ्ग्रहः स्यादिति सर्वक्रियोपलक्षणम्। एवमधिकरणादिसर्वात्मको भगवान् त्वमेव प्रधानं भोग्यं पुरुषो भोक्ता तयोरपि परस्त्वमेव साक्षादित्यर्थः। रामकृष्णयोरैक्यमभिप्रेत्यैकवचनम् ॥ ४ ॥ एतदिति ॥ हे अधोक्षज आत्मन्निति ङ्लुक् छान्दसः। स्वस्मिन्नेवाधारभूते आत्मसृष्टमित्यत्रात्मना आत्मने आत्मनः सम्बन्धि आत्मैव सृष्टमिति समासभेदात्सर्वकारकसङ्ग्रहः। एतन्नानाविधं देवतिर्यगादिदेहरूपं विश्वम् आत्मना अन्तर्यामिरूपेणानुप्रविश्य स्वयं ततः जन्मादिविकाररहितोऽपि क्रियाशक्तिः प्राणः ज्ञानशक्तिर्जीवश्च संस्त्वमेव बिभर्षि धारयसि पोषयसि च ॥ ५ ॥ ननु प्राणादीनामपि कारणत्वात्कथं परमेश्वरस्यैव कारणत्वमित्याशङ्क्य प्राणादीनां शक्तयोऽपि तस्यैवेत्याह—प्राणेति ॥

> एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ॥ आत्मनानुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यजः ॥ ५ ॥
>
> प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ॥ पारतन्त्र्याद्वै साद्दश्याद्वयोश्चेष्टैव चेष्टताम् ॥ ६ ॥
>
> कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥

प्राणः समष्टिप्राणात्मकं सूत्रम् आदिपदेन कालप्रकृतिमहत्तत्त्वाहङ्कारमहाभूतपञ्चैकैकाशेन्द्रियसङ्ग्रहः प्राणादीनां विश्वसृजां विश्वकारणानां याः शक्तयस्ताः परस्य परमकारणस्येश्वरस्यैव नतु तेषां तत्र हेतुः महाप्राणादीनां पारतन्त्र्यात् यथा बाणादीनां पारतन्त्र्यान्न तेषां वेधशक्तिः किंतु पुरुषस्यैव तद्वदित्यर्थः। तथा द्वयोश्चेतनाचेतनत्वेन विसदृशत्वात् अचेतनस्य प्राणादिवर्गस्य चेतनपारतन्त्र्यमेव युक्तमित्यर्थः। तथा चोक्तम्। यदैते सङ्गता भावा इत्यारभ्य चोभयं समसृजुर्ह्यद इति अन्यच्च नानात्वात् स्वक्रियानीशा इत्यादि ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कथं स्यादत आह चेष्टैव चेष्टतामिति। शतार्थः। चेष्टमानानामेषां चेष्टैव न शक्तिः यथा वायोः शक्त्या तृणादीनां चलनं यथा च पुरुषस्य शक्त्या शराणां वेगस्तथेत्यर्थः ॥ ६ ॥ सर्वत्रान्यत्र पारतन्त्र्यं प्रपञ्चयति—कान्तिरिति ॥ चन्द्रस्य कान्तिः अग्नेस्तेजः अर्कस्य प्रभा ऋक्षाणां नक्षत्राणां विद्युतां च सत्ता स्फुरणमात्रेण सत्त्वं भूभृतां पर्वतानां यत्स्थैर्यं भूमेर्वृत्तिः सर्वाधारतया वर्तनं गन्धश्चेत्येतत्सर्वमर्थतः परमार्थतो भवान् तवैव शक्तिरित्यर्थः। " तमेव भान्तमनुभाति सर्वम् " इत्यादिश्रुतेः ॥ ७ ॥

तर्पणमिति ॥ अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं देवत्वं शोधकत्वं ता आपश्च तासां रसश्च तथा हे ईश्वर वायोश्च ओजः इन्द्रियसामर्थ्यं सहोन्तःकरणसामर्थ्यं बलं शरीरसामर्थ्यं चेष्टा शरीरव्यापारः गतिश्चेतनाचेतनसाधारणं गमनं च तवैव शक्तिः तथेश्वर इति पाठः ॥ ८ ॥ दिशामिति ॥ दिशामुपाधिकृताकाशप्रदेशानामवकाशो दिशश्च त्वं खं च सामान्याकाशः तदाश्रयश्च स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः । नादः पश्यन्ती ओङ्कारो वर्णश्च मध्यमा आकृतीनां पदार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदं वर्णपदाद्यात्मिका वैखरी च त्वमित्यर्थः । तथा च श्रुतिः । "चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहायां त्रीणि निहितानि तानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥" इति ॥ ९ ॥ इन्द्रियमिति ॥ इन्द्रियाणामपीन्द्रियं विषयप्रकाशने शक्तिः देवाश्चेन्द्रियाधिष्ठातारः तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वंबुद्धे रवबोधः व्यवसायात्मिका शक्तिर्भवान् जीवस्य सती अनुस्मृतिं यथार्थात्मानुसन्धानं च भवान् ॥ १० ॥ भूतानामिति ॥ भूतानामाकाशादीनां कारणं भूतादिस्तामसोऽहंकारस्त्वमसि इन्द्रियाणां कारणं च तैजसः राजसोऽहंकारस्त्वमसि विविधं कल्पनं ज्ञानमेभिस्ते विकल्पा देवा मनश्च तेषां कारणं वैकारिकः सात्विकोऽहंकारस्त्वमसि अनुशा-

**तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥८॥ दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥ ९ ॥ इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥१०॥ भूतानामसि भूतादिरिन्द्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥ ११ ॥ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥ सत्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥ तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदाऽव्यावहारिकः ॥ १४ ॥**

यिनाम् अनुशयपदवाच्यकर्मवासनावतां जीवानां संसारकारणं प्रधानं प्रकृतिश्च त्वमित्यर्थः ॥ ११ ॥ नश्वरेष्विति ॥ इह प्रपञ्चे नश्वरेषु भावेषु पदार्थेषु यत्तस्य परमार्थभूतमनश्वरं रूपं तत्वमसि । यथा द्रव्यस्य मृत्सुवर्णादेर्विकारेषु कार्येषु घटकुण्डलादिषु नश्वरेष्वपि द्रव्यमात्रं मृत्सुवर्णादिरूपमनश्वरं निरूपितं भवति तथेत्यर्थः ॥ १२ ॥ ननु कार्यरूपोऽप्यहमुक्तस्तत्कथमनश्वरत्वं तत्राह—सत्वमिति ॥ सत्वादयः प्रकृतिगुणाः गुणकार्यभूता देहेन्द्रियान्तःकरणादयो याश्च तेषां वृत्तयः सुखदुःखरागलोभादयस्ते योगमायया आत्माज्ञानेन अद्धा साक्षात् परे ब्रह्मणि त्वयि कल्पिताः अहं मनुष्यो दुःख्यहं सुख्यहं शृणोम्यहमिति त्वदंशभूते जीवे आरोपिताः ॥ १३ ॥ तस्मादिति ॥ यर्हि यस्मात् त्वयि कल्पिता एव तस्मादमी भावाः दुःखसुखादिविकारास्त्वयि न सन्त्येव । यदा च त्वममीषु विकारेषु स्थितस्तदैव त्वयि प्रतीयन्ते अन्यदा यदा सुषुप्त्यादौ देहेन्द्रियादयो लीना भवन्ति तदा तु त्वमव्यावहारिकः शुद्ध एव प्रतीयसे अतस्ते विकारा आरोपिता एव त्वयि प्रतीयन्ते वस्तुतो न सन्त्येवेत्यर्थः ॥ १४ ॥

गुणप्रवाह इति ॥ गुणप्रवाहे सत्वादिगुणकार्यभूते एतस्मिन्देहादौ अखिलात्मनस्तव सूक्ष्मां गतिं दुर्ज्ञेयं सच्चिदानन्दात्मकं स्वरूपम् अबुधा अजानन्तः अबुध्वेति पाठान्तरम् । अत एव अबोधेन स्वरूपाज्ञाननिबन्धनदेहाद्यभिमानेन कृतैः कर्मभिः पुण्यपापात्मकैरिह संसारे संसरन्ति देवमनुष्यतिर्यगादियोनिं प्राप्नुवन्ति ॥ १५ ॥ यदृच्छयेति ॥ इह लोके दुर्लभां सुकल्पां पटुतरेन्द्रियादिमत्तया पुरुषार्थसाधनसमर्थां नृतां मनुष्यतनुं प्राप्यापि हे ईश्वर त्वन्मायया स्वार्थे स्वपुरुषार्थसाधने त्वत्तत्वानुसन्धानभक्त्यादौ प्रमत्तस्य अनवहितस्य मम वयः आयुर्वृथैव गतम् ॥ १६ ॥ असाविति ॥ देहे असावहम् अस्यान्वयादिषु पुत्रकलत्रादिषु च ममैवैते इत्यभिमानपूर्वकं स्नेहरूपैः पाशैर्भवान् सर्वमेवेदं जगद्बध्नाति ॥१७॥ युवामिति ॥ युवां नोऽस्माकं सुतौ न भवतः किंतु साक्षात्प्रधानपुरुषेश्वरावेव भूभारभूतस्य क्षत्रस्य क्षपणे विनाशार्थमवतीर्णौ तथा स्वयमेव ह स्फुटमात्मजन्मकाले कथितवानसि ॥ १८ ॥ तदिति ॥ हे आर्त्तबन्धो तत्तस्मात् त्वद्भजनं विना गतस्यायुषो व्यर्थत्वात् अद्य आपन्नानां शरणमागतानां संसृतिभयमपहन्तीति तथाभूतं तव पदारविन्दमरणं शरणं गतोऽस्मि । एतावतैव इन्द्रियलालसेन हेतुना मर्त्ये शरीरे आत्मदृक् आत्मबुद्धिः त्वयि परमेश्वरे चापत्यबुद्धिर्जातोऽस्मि ॥ १९ ॥ ननु मयि अप-

गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥
स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥ असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ॥ १७ ॥
युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह ॥ १८ ॥ तत्ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभया-
पहमार्तबन्धो ॥ एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥ सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ
इत्यनुयुगं निजधर्मगुप्त्यै ॥ नानातनुर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥

त्यबुद्धिः सत्यैव त्वत्तो जन्माङ्गीकारादित्याशङ्क्याह—सूतीति ॥ हे उरुगाय ननु अजः जन्मरहितोऽप्यहं निजधर्माणां स्वप्रवर्तितधर्ममर्यादानां गुप्त्यै रक्षणायानुयुगं प्रतियुगं जज्ञे अवतरामीति भवान् सूतीगृहे नौ आवां प्रतिजगाद अतो गगनवत् असङ्गः एव नानातनूः वराहनरादिजातीयाः विदधद्बिभ्राणस्त्वं क्रीडान्ते ताः तनूः जहासि तिरोभावयसि । यथा गगनं घटाद्युपाधिकृतनानातनूः विदधत् उपाधिनाशाच्च ताः परित्यजच्च निर्लेपव्यापकत्वादिनिजस्वभावं न परित्यजति तथा भगवतो नानास्वरूपाणि दधतः परित्यजतश्च न सच्चिदानन्दादिस्वभावत्यागः अतः भूम्नो व्यापकस्य तव विभूतिरूपां मायां को वेद न कोऽपि ज्ञातुं शक्तः अतस्त्वय्यपत्यबुद्धिर्न युक्ता । यत्तु अनुयुगं प्रतियुगं सुतपाः पृश्निरिति युगं कश्यपोऽदितिश्चेति युगं वसुदेवो देवकी चेति युगम् एवं प्रतियुगमहं जज्ञ इति स्वामिपादाः । तत्तु भागवते एवमेवोक्तत्वात्तदभिप्रायेण पुराणेषु पूर्वानुवादस्य किंचिदन्यथापि बहुस्थले दृष्टत्वादत्र तोषण्यादिरीत्या व्याख्यातम् ॥ २० ॥

आकर्ण्येति ॥ सात्वतर्षभः भगवान् इत्थं पितुर्वाक्यमाकर्ण्य प्रश्रयेण विनयेनानम्रः प्रहसन् श्लक्ष्णया मधुरया गिरा तं प्रत्याह स्म ॥ २१ ॥ वच इति ॥ हे तात यत् येन वचनेन नः अस्मान् पुत्रानुद्दिश्य शिक्षणार्थं " तत्वमसि श्वेतकेतो " इतिवदुपदेशविषयीकृत्य तत्वग्रामः तत्वसमूह ईश्वरवैभवरूपः उदाहृतः सम्यङ्निरूपितः तदेतत् वो युष्माकं वचः समवेतार्थं यथार्थमुपमन्महे उपमन्यामहे ॥ २२ ॥ अहमिति ॥ हे यदुश्रेष्ठ अहं यूयमसावार्यः बलभद्रः इमे च सर्वे द्वारकावासिनो जनाः किं बहुना सचराचरं सर्वेऽप्येवं परमात्मात्मकतयैव विमृश्याः विचार्य निश्चेतव्या इत्यर्थः । विमृग्या इत्यपि पाठः । यद्वा । सचराचरमिति क्रियाविशेषणम् ॥ २३ ॥ आत्मेति ॥ आत्मा हि एकः स्वयंज्योतिर्नित्यः अन्यो देहादिभ्यो भिन्नः निर्गुणश्चापि सन् आत्मसृष्टैर्गुणैर्हेतुभिः तैर्गुणैः कृतेषु भूतेषु देवमनुष्यादिषु यथाशयं यथोपाधि बहुधा ईयते प्रतीयते न वस्तुतः । कुतः एको ज्योतिर्दृश्यत्वेन नित्योऽप्यनित्यत्वेन शरीरादिभ्योऽन्योऽप्यनन्यत्वेन निर्गुणोऽपि सगुणत्वेनेत्यादि

श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ॥ प्रत्याह प्रश्रयाऽऽनम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥ श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥ अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥ २३ ॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥ आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥ खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् ॥ आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि ॥ २५ ॥ श्रीशुक उवाच ॥ एवं भगवता राजन्वसुदेव उदाहृतः ॥ श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥ अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ॥ श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥ कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ॥ स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥

॥ २४ ॥ एतदेव सदृष्टान्तं दर्शयति—खमिति ॥ यथा खं ज्योतिरापो भूः एतानि भूतानि तत्कृतेषु घटादिषु आविस्तिरोभावादिकं यान्ति तथा असावात्मापि आविस्तिरोल्पभूरिभावप्राधान्येन आविस्तिरोल्पभूरित्वं याति एकोऽपि नानात्वं च याति तत्र मनुष्यादावाविर्भावः वृक्षादौ तिरोभावः मशकादावल्पत्वं गजादौ भूरित्वं महत्त्वं स्वत एकत्वम् उपाधितो नाना ॥ २५ ॥ एवमिति ॥ हे राजन् एवं भगवता उदाहृतं निरूपितमात्मैकत्वं श्रुत्वा विनष्टा नाना धीर्यस्य सः वसुदेवः प्रीतमनास्तूष्णीमभूत् ॥ २६ ॥ अथेति युग्मम् ॥ अथ हे कुरुश्रेष्ठ सर्वदेवतात्मकभगवदाधारत्वात् सर्वदेवतारूपा देवकी आत्मजाभ्यां रामकृष्णाभ्यां गुरोः सान्दीपनेः पुत्रमानीतं श्रुत्वा सुविस्मिता सती स्वपुत्रान् कंसविहिंसितान् स्मरन्ती अत एव वैक्लव्यात् शोकादश्रूणि लोचनयोर्यस्याः सा कृष्णरामौ समाश्राव्य संबोध्य कृपणं दैन्ययुक्तं यथा स्यात्तथा प्राह स्म ॥ २७ ॥ २८ ॥

रामेति ॥ हे राम हे राम हे अप्रमेयात्मन् अचिन्त्यरूप हे कृष्ण हे योगेश्वराणामपीश्वर वां युवां विश्वसृजां ब्रह्मादीनाम् ईश्वरौ आदिपुरुषौ जगत्कारणभूतौ अहं वेद वेद्मि ॥ २९ ॥ कालेति ॥ कालेन विध्वस्तं सत्वं सत्वगुणकार्यं विवेकधैर्यादिसाधुत्वं वा येषाम् अत एव उच्छास्त्रवर्तिनां शास्त्रीयमर्यादातिलङ्घिनाम् अत एव भूमेर्भारायमाणानां राज्ञां क्षयाय मे मयि अवतीर्णौ किलाद्य मे इति पाठान्तरे क्षययेति शेषः ॥ ३० ॥ यस्येति ॥ हे विश्वात्मन् हे आद्य यस्यांशः पुरुषः तस्यांशः प्रकृतिस्तस्या अंशा गुणास्तेषां भागेन परमाणुमात्रलेशेनापि विश्वोत्पत्त्यादयो भवन्ति किलेति शास्त्रप्रसिद्धं तं त्वा त्वामहं गतिं शरणं गतास्मि ॥ ३१ ॥ चिरादिति ॥ चिरात् चिरकालात् मृतस्य सुतस्यादाने आनीय दाने निमित्ते गुरुणा सान्दीपनिना चोदितौ युवां पितृस्थानात् यमसदनात् गुरुदक्षिणारूपं तं गुरुपुत्रमानिन्यथुः ॥ ३२ ॥ तथेति ॥ हे योगेश्वरेश्वरौ यथा गुरोः कामं कृतवन्तौ तथा मे ममापि कामं मनोरथं युवां कुरुतं भोजराजः कंसस्तेन हतान्स्वपुत्रान् युवाभ्यामानीतान्द्रष्टुं कामये इति ॥ ३३ ॥ एवमिति ॥

**देवक्युवाच ॥ राम रामाप्रमेयात्मन्कृष्ण योगेश्वरेश्वर ॥ वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥ कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥३०॥ यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ॥ भवन्ति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥ चिरान्मृतसुतादाने गुरुणा किल चोदितौ ॥ आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥ तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान् ॥३३॥ श्रीशुक उवाच ॥ एवं सञ्चोदितौ मात्रा रामः कृष्णश्च भारत ॥ सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥ तस्मिन्प्रविष्टावुपलभ्य दैत्यराड् विश्वात्मदैवं सुतरां यथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥३५॥ तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनस्तयोः॥दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म पुनद्यदम्बु ह ॥३६॥ समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥**

हे भारत मात्रैवं संचोदितौ योगमायामुपाश्रितौ रामकृष्णौ सुतलं संविविशतुः ॥ ३४ ॥ तस्मिन्निति ॥ तस्मिन्सुतले प्रविष्टौ विश्वेषामात्मनां दैवं दैवतभूतौ एकत्वमीश्वरत्वेनैक्यात् तथात्मनः स्वस्य सुतरां दैवतभूतौ रामकृष्णावुपलभ्य दृष्ट्वा तयोर्दर्शनेन य आह्लादस्तेन परिप्लुतो व्याप्तः आशयोन्तःकरणं यस्य स दैत्यराट् बलिः सान्वयः सपरिवारः सद्यस्तदैवोत्थाय ननाम ॥ ३५ ॥ तयोरिति ॥ तयोर्महात्मनोः रामकृष्णयोः श्रेष्ठमासनं समानीय समर्प्य तत्रासने निविष्टयोः पादाववनिज्य प्रक्षाल्य तज्जलं सवृन्दः सपरिवारो मुदा युक्तो बलिः शिरसा दधार । ह हेतौ यस्मात् यदम्बु ययोरवनेजनोदकम् आब्रह्म ब्रह्माणमभिव्याप्य जगत् पुनत्पवित्रयद्वर्तते ॥ ३६ ॥ समिति ॥ महार्हैः श्रेष्ठैर्वस्त्रादिभिर्विभूतिभिः ताम्बूलादिभिश्च स्वगोत्रादिसमर्पणेन स तौ समर्हयामास । तत्र अनुलेपनं चन्दनम् अमृतभक्षणम् अमृततुल्यं भक्ष्यं

स्वगोत्रं स्वकुलं पुत्रपौत्रकलत्रादि वित्तं धनम् आत्मा देहः ॥ ३७ ॥ स इति ॥ हे नृप स इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया भगवत्पदाम्बुजं मुहुर्बिभ्रत् धारयन् आनन्दजैर्जलैरश्रुभिराकुले व्याप्ते ईक्षणे अक्षिणी यस्य सः प्रहृष्टानि उदञ्चितानि रोमाणि यस्य सः गद्गदानि कुण्ठितान्यक्षराणि यस्य तादृशः सन् उवाच । गद्गदाक्षरमिति पाठे क्रियाविशेषणम् ॥ ३८ ॥ नम इति ॥ अनन्ताय शेषाय विश्वधारणाद्बृहते नमः । कृष्णाय वेधसे जगद्विधात्रे नमः । साङ्ख्यं ज्ञानशास्त्रं योगः कर्मयोगः भक्तियोगः अष्टाङ्गयोगश्च तयोर्वितानाय प्रवर्तकाय ब्रह्मणे परमात्मने नमः ॥ ३९ ॥ दर्शनमिति ॥ यत् वां युवां नोऽस्माकं रजस्तमःस्वभावानां त्वद्दर्शनाद्ययोग्यानामपि यदृच्छया प्रयत्नं विनैव दर्शनं प्राप्तौ तयोर्वां युवयोर्दर्शनं हि भूतानां स्वप्रयत्नेन दुष्प्रापमपि केषांचित् त्वत्कृपया अदुर्लभं सुप्रापं भवति ॥ ४० ॥ अहो राजसास्तामसाश्च वयं सात्विकेभ्योऽपि देवेभ्यः सभाग्या इत्याह—दैत्येति त्रयम् ॥ दैत्यदानवादयः प्रमथनायकान्ताः विशुद्धं रजस्तमोभ्यां रहितं सत्वमेव धाम मूर्तिर्यस्य तस्मिन्निति

स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ॥ उवाच हाऽऽनन्दजलाकुलेक्षणः प्रहृष्टरोमा नृपगद्गदाक्षरम् ॥३८॥ बलिरुवाच ॥ नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे ॥ साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥ दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम् ॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥ दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः ॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥ विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः ॥४२॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः ॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ॥ न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकूपात् ॥ निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वसखैश्चरामि ॥ ४५ ॥

शास्त्रोक्तं शरीरमस्यास्तीति तस्मिन्निति त्वयि नित्यं निबद्धं वैरं यैस्तव वयं तथान्ये च बौद्धकाद्या मनुष्या अपि तादृशा एव गन्धर्वादीनां बद्धवैरत्वाप्रसिद्धावपि राजसत्वादिना तत्तुल्यत्वमुक्तम् । तेषु च केचन चैद्यादयः उद्बद्धवैरेण या भक्तिस्तया तव संनिकृष्टाः संनिकर्षं प्राप्ताः केचन कामतो भक्त्या गोप्यादयः सन्निकृष्टाः तथा सत्वसंरब्धाः सत्वाविष्टा अपि सुरादयः न संनिकृष्टाः ॥ ४१ ॥ ४२ ॥ ४३ ॥ इदमिति ॥ हे योगेश्वरेश्वर योगेशा अपि इदमिति स्वरूपतः इत्थमिति प्रकारतश्च तव योगमायां न विदन्ति वयं दैत्याः कुतो विद्मः ॥ ४४ ॥ तन्न इति ॥ निरपेक्षैराप्तकामैरपि विमृग्यं यत् युष्मत् पादारविन्दं तदेव धिषणमाश्रयस्तस्मादन्यत् यद्गृहं तदेवान्धकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामङ्घ्रिषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन । यद्वा । विश्वस्य शरणभूतो यस्तवाङ्घ्रिस्तस्यो-

पसमीपे लब्धा वृत्तिर्दासोचितवर्तनं येन सोऽहं शान्तः सन् एक एव यथा चरामि उत अथवा सर्वेषां सखायो ये त्वद्भक्तास्तैः सह यथा चरामि तत्तथा नोऽस्मान् प्रसीद अनुगृहाण ॥ ४५ ॥ शाधीति ॥ हे प्रभो हे ईशितव्यानां नियम्यानामस्माकमशि नियन्तः अस्मान् शाधि कैङ्कर्यमादिश नोऽस्मान् निष्पापान् कुरु । यत्त्वदादिष्टमनुतिष्ठन् पुमान् विमुक्तपुण्यपापादिबन्धनः संश्चोदनायाः विधिनिषेधलक्षणाया विमुच्यते न हि त्वद्भक्तो विधिकिङ्करः स्यात् ॥ ४६ ॥ आसन्निति ॥ प्रथमेन्तरे स्वायंभुवे मन्वन्तरे मरीचेः प्रजापतेः ऊर्णायां मरीचये कलां प्रादादित्युक्तत्वात्तस्या एवोर्णेति नामान्तरं तस्यां भार्यायां षट् पुत्रा देवा आसन् ते च सुतां सरस्वतीं यभितुं मैथुनेन रन्तुं इडार्षः उद्यतं कं ब्रह्माणं वीक्ष्य जहसुः ॥४७॥ तेनेति युग्मम् ॥ ते च तेन परिहासात्मकेन दुष्टेन कर्मणा अधुना तत्क्षणम् आसुरीं योनिमगन् अगमन् मलोप आर्षः । अत एव हिरण्यकशिपोः सकाशाज्जाताः यद्यपि प्रह्लादादयस्तत्पुत्रा उक्तास्तथाप्यनयैवोक्त्या एतेऽपि ततो जाता इति ज्ञेयम् । केचित् हिरण्यकशिपोर्वीर्यात्कालनेमिक्षेत्रे जाता

शाध्यस्मानीशितव्येश निष्पापान्कुरु न प्रभो ॥ पुमान्यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६ ॥ श्रीभगवानुवाच ॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे ॥ देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४७ ॥ तेनासुरीमगन्योनिमधुनाऽवद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४८ ॥ देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा ताञ्छोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽन्तिके ॥ ४९ ॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद्विनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५० ॥ स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद् घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥ ५१ ॥ इत्युक्त्वा तान्समादाय इन्द्रसेनेन पूजितौ ॥ पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥

इत्याहुः । ते च योगमायया ततो नीताः सन्तः देवक्या उदरे जाताः हे राजन् बले ते च कंसेन विहिंसिताः सा च देवकी तान् स्वान् स्वकीयानात्मजान् मत्वा शोचति ते चेमेऽधुना तवान्तिकेऽध्यासते इमे इति तत्रैवोपविष्टान् बलिना शापमोचकभगवद्दर्शनार्थं तत्रानीतानङ्गुल्या निर्दिशति ॥ ४८ ॥ ४९ ॥ इत इति ॥ मातुः शोकस्यापनुत्तये निरासार्थम् इतः स्थानादेतान्प्रणेष्यामः ततः शोकापनोदनानन्तरं शापात् प्रजापत्युपहासनिमित्तात्तत्कृतादासुरभावाद्विनिर्मुक्ता अत एव विज्वरा निर्दुःखाः सन्तो लोकं प्रथमं कर्मशेषात् देवलोकं यास्यन्ति ॥ ५० ॥ स्मर इति ॥ स्वर्गभोगानन्तरं च स्मरसहित उद्गीथ इति मध्यमपदलोपी समासः इमे स्मरादयः षट् मत्प्रसादेन पुनः सतां गतिं प्राप्य मम लोकं यास्यन्ति स्मरस्यै व पूर्वं कीर्तिमदिति नाम वस्तुतः स्मरादीनि मरीचिपुत्रत्वदशायां नामानि ॥ ५१ ॥ इतीति ॥ इत्युक्त्वा तान् पुत्रान् समादाय इन्द्रसेनेन बलिना पूजितौ रामकृष्णौ पुनर्द्वारकामागत्य मातुः मात्रे पुत्रान् अयच्छताम् अर्पयामासतुः ॥ ५२ ॥

तानिति ॥ बालकान् मातृतोषार्थं श्रीकृष्णेच्छया बालकरूपेणाविर्भूतान् तान् कीर्तिमदादीन् दृष्ट्वा तेषां पुत्राणां स्नेहेन स्नुतौ प्रस्रवन्तौ स्तनौ यस्याः सा देवकी तान् परिष्व-ज्याङ्कमारोप्य अभीक्ष्णशो मूर्ध्नि अजिघ्रत् ॥ ५३ ॥ अपाययदिति ॥ यया मायया सृष्टिः प्रवर्तते तया विष्णोर्मायया मोहिता अत एव प्रीता सुतानां स्पर्शेन परिप्लुतं क्षरद् दुग्धं स्तनम् अपाययत् ॥ ५४ ॥ पीत्वेति युग्मम् ॥ गदाभृतो भगवतः पीतशेषमिति बभूव प्राकृतः शिशुरित्युक्तेः । शिशुभवनसमये दूरगमनेन निबन्धनोऽस्य कण्ठशोषो मा भूदिति देवकी स्तन्यं पाययामासेति तत्रानुक्तमप्यनयैवोक्त्या ज्ञेयम् । अमृतमयं तस्याः पयः पीत्वा नारायणस्य श्रीकृष्णस्याङ्गसंस्पर्शात् प्रतिलब्धम् आत्मदर्शनं स्वज्ञानं यैस्ते गोविन्दादीन्नमस्कृत्य सर्वभूतानां मिषतां पश्यतामेव सतां दिवौकसां धाम स्वर्गं ययुः ॥ ५५ ॥ ५६ ॥ तमिति ॥ देवी देवकी तं मृतानां पुत्राणामागमनपूर्वकं निर्गमं दृष्ट्वा सुविस्मिता सती हे नृप अहंताममतात्मिकाम् अपत्यादिरूपां वा कृष्णस्य रचितां मायां मेने ॥ ५७ ॥ एवमिति ॥ हे भारत अनन्तवीर्यस्य परमात्मनः कृष्णस्य एवं

तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥ पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ॥ नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥ ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् ॥ मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥ ५६ ॥ तं दृष्ट्वा देवकी देवी मृतागमन-निर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥५७॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥५८॥ सूत उवाच ॥ य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥५९॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

राजोवाच ॥ ब्रह्मन्वेदितुमिच्छामः स्वसारं रामकृष्णयोः ॥ यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥

विधान्यद्भुतानि अनन्तानि वीर्याणि पराक्रमाः सन्ति ॥ ५८ ॥ य इति ॥ जगतः श्रवणकीर्तनपरस्य जनस्य अघं पापं भिनत्तीति तथा तत् तत्रापि अलं निःशेषं यथा भवति तथा तद्भक्तानां सतां तु कर्णपूरं कर्णयोः परमानन्दजनकम् अत एव व्यासपुत्रैर्वर्णितं बहुवचनं पूजार्थम् अमृतं जन्ममरणादिभयनिवर्तिका श्रवणानन्दजनका च कीर्तिर्यशो यस्य तस्य मुरारेरिदं चरितं यः पुमान् शृणोति श्रावयेद्वा स भगवति स्थिरीकृतं चित्तं येन तथाभूतः संस्तस्य क्षेमं धाम कामादिभयरहितं लोकं याति॥५९॥ इति श्रीकृष्णसे-वार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे पञ्चाशीतितमे व्यधात्॥८५॥षडशीतितमेऽहारि सुभद्राऽथात्र मैथिलौ ॥ हरिर्भक्तावन्वगृह्णात्तत्र श्लोका नवेषवः ॥ अथोवाचेति वाक्यानि स्याद्द्विषष्टिरनुष्टुभाम् ॥८६॥ अन्येषां विवाहाः श्रुताः सुभद्राविवाहो मज्जन्महेतुः सोऽपि कथ्यतामित्याह—ब्रह्मन्निति ॥ विजयोऽर्जुनो रामकृष्णयोः स्वसारं भगिनीं

यथा येन प्रकारेणोपयेमे तं विवाहप्रकारं वयं वेदितुमिच्छामः । या तयोः स्वसा मम पितामही आसीत् ॥ १ ॥ अर्जुन इति युग्मम् ॥ प्रभुः अर्जुनः तीर्थयात्रायां निमित्तभूतायामवनीं पृथ्वीं पर्यटन् प्रभासं नाम तीर्थं प्रति गतः तत्र सः आत्मनो मातुलेयीं मातुलकन्यां सुभद्रां रामो दुर्योधनाय दास्यति अपरे वसुदेवादयस्तु तां तस्मै न दास्यन्तीत्यशृणोत् तल्लिप्सुः शेषषष्ठ्या समासः तां जिहीर्षुरित्यर्थः । अर्जुनः यतिर्भूत्वा रामं वञ्चयितुं भिक्षाव्याजेनान्तःपुरं प्रवेष्टुं च पूज्यतमं त्रिदण्डिवेषं विधाय द्वारकामगात् ॥ २ ॥ ॥ ३ ॥ तत्रेति ॥ पौरैः अजानता रामेण चाभीक्ष्णं सत्कृतः स्वार्थं सुभद्राविवाहं साधयतीति तथाभूतः सोऽर्जुनो वार्षिकान् आषाढाद्याश्विनान्तांश्चतुरो मासांस्तत्र द्वारकायां न्यवात्सीत् ॥ ४ ॥ एकदेति ॥ एकदा तमातिथ्येन निमन्त्र्य गृहमानीय बलेन यच्छ्रद्धयोपहृतं परिविष्टं भैक्षमन्नं तदर्जुनः बुभुजे ॥ ५ ॥ स इति ॥ सोऽर्जुनस्तत्र गृहे महतीं कौमारमतिक्रान्तां वीराणां मनो हरतीति तथा तां कन्यामपश्यत् दृष्ट्वा प्रीत्योत्फुल्ले विकसिते ईक्षणे यस्य सः तस्यां कन्यायां भावेन रत्यभिप्रायेण क्षुब्धं क्षुभितं मनो दधे

श्रीशुक उवाच ॥ अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ॥ गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥२॥ दुर्योधनाय रामस्तां दास्यतीति न चापरे ॥ तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥३॥ तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः ॥ पौरैः सभाजितोऽभीक्ष्णं रामेणाऽजानता च सः ॥४॥ एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् ॥ श्रद्धयोपाहृतं भैक्ष्यं बलेन बुभुजे किल ॥५॥ सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ॥ प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥ सापि तं चकमे वीक्ष्य नारीणां हृदयङ्गमम् ॥ हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥ तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ॥ न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥ महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम् ॥ जहारानुमतः पित्रोः कृष्णस्य च महारथः ॥ ९ ॥ रथस्थो धनुरादाय शूरांश्चाऽरुन्धतो भटान् ॥ विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥ तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ॥ गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥

॥ ६ ॥ सापीति ॥ व्रीडितौ व्रीडाप्रयुक्तौ अपाङ्गौ नेत्रान्तौ यस्याः सा तस्मिन्नेव न्यस्तं हृदयमीक्षणे च यस्याः सा तं नारीणां हृदयंगमं मनोहरं वीक्ष्य चकमे पतित्वेन कामितवती ॥७॥ तामिति ॥ परं केवलं तां कन्यामेव समनुध्यायन् अन्तरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः अतिबलीयसा कामेन भ्रमच्चित्तं यस्य सः शं रामादिसम्मानजनितं सुखं न लेभे ॥ ८ ॥ महत्यामिति युग्मम् ॥ कदाचिन्महत्यां देवयात्रायां निमित्तभूतायां पित्रोः देवकीवसुदेवाभ्यां कृष्णेन च शेषे षष्ठ्यौ । अनुमतः महारथो रथस्थोऽर्जुनः धनुरादायार्जुनः आ सर्वतो रुन्धतः शूरान्भटान् विद्राव्य पलायितान् कृत्वा स्वानां यदूनां क्रोशतां सतां दुर्गात् प्राकाराद्बहिर्निर्गतां रथस्थां तस्मै रथसामग्रीं दातुं भगवतैव रथमारोपितां कन्यां जहार । यथा मृगराट् सिंहः स्वभागं हरति तद्वत् ॥९॥१०॥ तदिति ॥ तत् हरणं श्रुत्वा रामः क्षुभितः क्रुद्धः ततः सान्त्वयता कृष्णेन सुहृद्भिरन्यैश्च गृहीतौ

पादौ यस्य सोऽन्वशाम्यत शान्तो जातः । तङ्कर्षः ॥ ११ ॥ प्राहिणोदिति सार्द्धम् ॥ कृष्णानुमत्यैव तेन हृतेति न तस्य दोष इति हेतोः मुदा युक्तो बलः पारिबर्हाणि प्रीत्या देयानि श्रेष्ठवस्तूनि तथा महाधना अनर्घ्या उपस्करा अलङ्कारा येषां तान् इभान् गजान् रथान् अश्वान् नरान् योषितो दासीश्च वरवध्वोः प्राहिणोत् । तदा च यदवः पाण्डवाश्च सर्वे प्रीत्या संहृष्टा बभूवुः । इदमर्द्धमसार्वत्रिकम् ॥ १२ ॥ अथ स्वयं प्रत्यक्षतोऽनुभूतं तच्चरितविशेषमपृष्टमपि स्वयमाह शुक उवाचेति । मध्ये पुनरुक्तिः कथान्तरापेक्षया कृष्णस्येति ॥ कृष्णे या एका अनन्यप्रयोजना भक्तिस्तयैव पूर्णार्थः पूर्णमनोरथः शान्तः कविः विवेकी अलम्पटः विषयासक्तिरहितः श्रुतदेव इति श्रुतो नाम्ना प्रसिद्धः द्विजश्रेष्ठः कृष्णस्य भक्त आसीत् ॥ १३ ॥ स इति ॥ स च गृहाश्रमी अपि अनीहया अनुद्यमेनैवागतं यदाहार्यं भोज्यं तेनैव निर्वर्तिता निजाः क्रिया येन सः विदेहेषु विदेहवंशावासदेशेषु तत्रापि मिथिलायां पुर्यामुवास ॥ १४ ॥ यात्रेति ॥ यात्रामात्रं शरीरादिनिर्वाहमात्रं तु दैवात् प्रारब्धात् उपनमत्युत प्रत्यागच्छत्येव अधिकं

प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ॥ महाधनोपस्करेभरथाश्वनरयोषितः ॥ श्रीशुक उवाच ॥ कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ॥ १२ ॥ कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥ १३ ॥ स उवास विदेहेषु मिथिलायां गृहाश्रमी ॥ अनीहयाऽऽगताऽहार्यनिर्वर्तितनिजक्रियः ॥१४॥ यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ॥ नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥ १५ ॥ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः ॥ मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥ १६ ॥ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् ॥ आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १७ ॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ॥ अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥ तत्र तत्र तमायान्तं पौरा जानपदा नृप ॥ उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥ आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः ॥ अन्ये च तन्मुखसरोजमुदारहाससस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २० ॥

तु प्रयत्नेनापि नागच्छति इति मत्वा तावता अप्रयत्नप्राप्तेनैव संतुष्टो यथोचिताः क्रियाश्चक्रे ॥ १५ ॥ तथेति ॥ अङ्ग हे राजन् तद्राष्ट्रपालः तद्देशाधिपतिः बहुलाश्व इति श्रुतो नाम्ना प्रसिद्धः । मैथिलो मिथिलस्य जनकस्य वंशः मिथिलाया ईश्वरो वा निरहंमानः राजत्वभक्तत्वाहंकाररहितः ज्ञानी तथा श्रुतदेववद्भगवद्भक्तश्चात उभावप्यच्युतस्य प्रियौ ॥१६॥ तयोरिति ॥ तयोः प्रसन्नः सन्भगवान् कृष्णः स्वयं प्रभुरेव दारुकेण सारथिना आहृतमानीतं रथं मुनिभिः साकं सहारुह्य विदेहान्देशान् प्रययौ ॥१७॥ मुनीनां नामान्याह—नारद इति ॥ कृष्णो द्वैपायनः रामो भार्गवः अहं शुकः ॥ १८ ॥ तत्रेति ॥ हे नृप पौराः पुरवासिनः जानपदाः देशवासिनश्च सार्घाः हस्ता येषां ते तत्र तत्र मार्गे आयान्तं तं भगवन्तमुपतस्थुः पूजितवन्तः । ग्रहैः गुरुशुक्रादिभिः सहोदितं सूर्यमिव ॥ १९ ॥आनर्तेति ॥ आनर्त्ताद्यर्णान्तदेशवर्त्तिनो जनाः तथान्ये च अन्यदेशीया नृनार्यः

नरो नार्यश्च उदारो हासः स्निग्धे ईक्षणे च यस्मिंस्तत्तस्य भगवतो मुखसरोजं दृशिभिः पपुः । मुखगतलावण्यरूपं मकरन्दं नेत्रचषकैः पपुरित्यर्थः । आनर्त्तादयः केचन मार्गस्थाः केचित्पार्श्वस्था अपि तेषां कृपया वक्रेणापि पथा गमनात् अत एवागाच्छनकैर्विदेहान् इति वक्ष्यते ॥ २० ॥ तेभ्य इति ॥ त्रिलोकगुरुः भगवान् स्वदर्शनेन विनष्टं तमिस्रमज्ञानं यासां तादृशो बुद्धयो येषां तेभ्यः । " पुमान् स्त्रिया " इत्येकशेषात् नृभ्यो नारीभ्यश्चेत्यर्थः । अर्थदृशं तत्वज्ञानं तत्फलं क्षेमं भाविनं मोक्षं च स्वरूपादृष्ट्यैव यच्छन् तथा दिगन्तधवलं दशदिक्षु व्याप्तं विशुद्धं सुरैर्नृभिश्च गीतम् अशुभघ्नं गानकर्तॄणां श्रोतॄणां च सर्वपापनिवर्तकं स्वयशः शृण्वन् शनकैर्विदेहान्देशान् अगात् ॥२१॥ ते इति ॥ हे नृप ते वैदेहाः पौरा जानपदाश्च अच्युतं प्राप्तमाकर्ण्य मुदिताः गृहीतमर्हणं यैस्ते पाणयो येषां ते तस्मै भगवते अभीयुः तं प्रत्युज्जग्मुः ॥ २२ ॥ दृष्ट्वेति ॥ उत्तमश्लोकं कृष्णं श्रुतपूर्वान् मुनींश्च दृष्ट्वा प्रीत्योत्फुल्लानि आननानि आशया अन्तःकरणानि च येषां ते विदेहवासिनो जना धृतो बद्धोऽञ्जलिर्येषु तैः कैः शिरोभिस्तान्नेमुः ॥ २३ ॥ स्वे-

**तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् ॥ शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप ॥ अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥ दृष्ट्वा त उत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥ २३ ॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ॥ मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ २४ ॥ न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः ॥ मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली ॥ २५ ॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ॥ उभयोराविशद्गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥ श्रोतुमप्यसतां दूराज्जनकः स्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥ २७ ॥ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ॥ नत्वा तदङ्घ्रीन्प्रक्षाल्य तदपो लोकपावनीः ॥ २८ ॥ सकुटुम्बो वहन्मूर्ध्ना पूजयाञ्चक्र ईश्वरान् ॥ गन्धमाल्याम्बराकल्पधूपदीपार्घगोवृषैः ॥ २९ ॥**

ति ॥ जगद्गुरुं तं श्रीकृष्णं स्वानुग्रहार्थं सम्प्राप्तं मन्वानौ मैथिलः श्रुतदेवश्चेत्येतौ प्रभोस्तस्य पादयोः पेततुः ॥ २४ ॥ न्यमन्त्रयेतामिति ॥ संहतौ संयोजितावञ्जली ययोस्तौ मैथिलः श्रुतदेवश्चेत्येतौ द्विजैः सहितं दाशार्हं कृष्णम् आतिथ्येन पूजार्थं युगपदेव न्यमन्त्रयेताम् ॥ २५ ॥ भगवानिति ॥ तत्तयोर्निमन्त्रणमभिप्रेत्य अङ्गीकृत्य द्वयोः प्रियं कर्तुमिच्छया ताभ्यामलक्षितः मद्गृहादन्यस्य गृहं यातीत्यज्ञात एव भगवान् उभाभ्यां रूपाभ्यामुभयोरपि गेहं मुनिसाहित्यादिनाऽऽविशत् ॥ २६ ॥ श्रोतुमिति त्रयम् ॥ प्रवृद्धया भक्त्या उद्धर्षम् उद्गतहर्षं हृदयं यस्य अस्रैरानन्दाश्रुभिः आविले प्राप्ते ईक्षणे यस्य स चासौ स च अत एव महामना उदारचित्तः जनकः असतां दुराचाराणां श्रोतुमपि दूरान् कृपया स्वगृहागतान् आनीतेषु निवेदितेष्वासनश्रेष्ठेषु सुखं यथा तथा आसीनान् नत्वा तेषामङ्घ्रीन् प्रक्षाल्य लोकपावनीस्तेषामङ्घ्रीणामपो जलानि समासान्ता-

भाव आर्षः । सकुटुम्बो मूर्ध्ना वहन् मूर्ध्नि धारयन् ईश्वरं कृष्णं तत्तुल्यान् मुनींश्चेति ईश्वरान् गन्धादिभिः पूजयामास । आकल्पोऽलङ्कारः गोवृषैरिति गवादिनिवेदनमपि कृतवानित्यर्थः । ईश्वरानिति बहुवचनेन मुनिसमूहस्यापि रूपद्वयं जातं भगवानेव वा सर्वस्वरूपो बभूवेति ज्ञेयम् ॥ २७ ॥ २८ ॥ २९ ॥ वाचेति ॥ ततोऽन्नेन तर्पितान् मधुरया गिरा प्रीणन् प्रीणयन् अङ्कगतौ अङ्कीकृतौ विष्णोः कृष्णस्य पादौ शनकैः संस्पृशन् संमर्दयन् मुदा हर्षेणेदं वक्ष्यमाणमाह स्म ॥ ३० ॥ भवानिति ॥ हे प्रभो भवान् हि स्वदृक् स्वप्रकाशः सर्वभूतानामात्मा चेतयिता साक्षी च अथ अतः कारणात् यद्वा त्वमदृश्यः अथापीति त्वत्पदाम्भोजं स्मरतां भक्तानां नोऽस्माकं दर्शनं गतः ॥ ३१ ॥ स्ववच इति ॥ एकान्तभक्तात् अनन्यप्रयोजनभक्तियुक्तात् अनन्तः सङ्कर्षणो बन्धुरपि श्रीर्लक्ष्मीर्भार्यापि अजो ब्रह्मा पुत्रोऽपि मम प्रियो न भवतीति यदात्थ कथयसि तत्स्ववचः ऋतं सत्यं कर्तुं भवान् अस्माकं दृग्गोचरो नेत्रविषयो जातः ॥ ३२ ॥ क इति ॥ यस्त्वं निष्किंचनानां सर्वतो विरक्तानां शान्तानां मुनीनाम् आत्मदः

वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ॥ पादावङ्कगतौ विष्णोः संस्पृशञ्छनकैर्मुदा ॥ ३० ॥ राजोवाच ॥ भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ॥ अथ नस्तत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ ३१ ॥ स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ॥ यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः ॥ ३२ ॥ को नु त्वच्चरणाम्भोजमेवं विद्विसृजेत्पुमान् ॥ निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः॥३३॥ योऽवतीर्य यदोर्वंशे नृणां संसरतामिह ॥ यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥ ३४ ॥ नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे ॥ नारायणाय ऋषये सुशान्तं तप ईयुषे ॥ ३५ ॥ दिनानि कतिचिद्भूमन्गृहान् नो निवस द्विजैः ॥ समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥ ३६ ॥ इत्युपामन्त्रितो राज्ञा भगवाँल्लोकभावनः ॥ उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥ ३७ ॥ श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा ॥ नत्वा मुनीन्सुसंहृष्टो धुन्वन्वासो ननर्त ह ॥ ३८ ॥

आत्मानमपि ददासि अन्यदानस्य का वार्ता । एवंवित्पुमान् तस्य तव चरणाम्भोजं को नु विसृजेत् परित्यजेत् ॥ ३३ ॥ य इति ॥ इह संसारे संसरतां जन्ममरणाद्यनुभवतां नृणां प्राणिनां तच्छान्त्यै तस्य संसारस्योपशमनाय यस्त्वं यदोर्वंशेऽवतीर्य त्रैलोक्यवृजिनापहं यशो वितेने ॥ ३४ ॥ नम इति ॥ सुशान्तं परोद्वेजनरहितं तपः ईयुषे लोकशिक्षार्थं कुर्वते स्पष्टं शेषम् ॥ ३५ ॥ दिनानीति ॥ हे भूमन् द्विजैर्मुनिभिः समेतस्त्वं नोऽस्माकं गृहान् गृहेषु कतिचिद्दिनानि निवसन् पादरजसा इदं निमेः कुलं पुनीहि पवित्रीकुरु ॥ ३६ ॥ इतीति ॥ राज्ञा जनकेनेत्येवमुपामन्त्रितः संप्रार्थितः यतो लोकभावनः लोकपालकः अतो मिथिलानरयोषितां कल्याणं कुर्वन् कर्तुं भगवांस्तत्रोवास ॥ ३७ ॥ श्रुतेति ॥ यथा जनकस्तथा श्रुतदेवोऽपि स्वगृहान् प्रति प्राप्तमच्युतं मुनींश्च नत्वा सुसंहृष्टः सन् वासो धुन्वन् परिभ्रामयन् ननर्त ॥ ३८ ॥

तृणेति ॥ स्वगृहाभ्यन्तरात् प्रतिवेशिगृहेभ्यश्च आनीतेषु तृणमयेषु पीठेषु बृसीषु दर्भासनेषु चैतान् मुनीनुपवेश्य स्वागतप्रश्नेनाभिनन्द्य सभार्यः स श्रुतदेवो मुदा हर्षेण तेषामङ्घ्रीनवनिजे अवनिनिजे प्रक्षालितवान् । अभ्यासलोप आर्षः ॥ ३९ ॥ तदिति ॥ महाभागः उद्धर्षः उत्कटहर्षवान् लब्धसर्वमनोरथः स गृहेण अन्वयेन कुटुम्बेन च सहितमात्मानं तदम्भसा पादप्रक्षालनजलेन स्नापयांचक्रे॥४०॥फलेति ॥ फलानि चार्हणानि गन्धपुष्पधूपदीपादीनि च उशीराणि सुगन्धितृणविशेषमूलानि तैः सुवासितानिशिवानि शीतलानि अमृतवत्स्वादूनि अम्बूनि च तैः । यद्वा । शिवामिष्टतार्थं घटनिक्षिप्तपक्वशुष्कामलीसुरभ्या मृदा कयाचित् कस्तूरीतुल्यगन्धया मृदा च तुलस्या कुशैरम्बुजैश्च सत्वविवर्धनान्धसा भूतानुपद्रवलब्धत्वात् सत्वगुणवर्द्धकं यदन्नं तेन च यथोपपन्नया अनायासेन सम्पन्नया सपर्यया पूजयामास श्रुतदेव आराधयामास ॥ ४१ ॥ स इति ॥ गृहमेवान्धकूपस्तस्मिन्पतितस्य मम कृष्णेन तथास्य कृष्णस्यात्मनो मूर्तेर्निकेतैः निवासस्थानभूतैः अत एव सर्वतीर्थानामास्पदभूता पादरेणवो येषां तथाभूतैर्भूसुरैश्च सह

तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ॥ स्वागतेनाभिनन्द्याङ्घ्रीन्सभार्योऽवनिजे मुदा ॥ ३९ ॥ तदम्भसा महाभाग आत्मानं स सहान्वयम् ॥ स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४० ॥ फलार्हणोशीरशिवामृताम्भसा मृदा सुरभ्या तुलसीकुशाम्बुजैः ॥ आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा ॥ ४१ ॥ स तर्कयामास कुतो ममान्वभूद्गृहान्धकूपे पतितस्य सङ्गमः ॥ यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥ सूपविष्टान्कृतातिथ्याञ्छ्रुतदेव उपस्थितः ॥ सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥ ४३ ॥ श्रुतदेव उवाच ॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वात्ममनुविश्यावभासते ॥ ४५ ॥

यः सङ्गमः स कुतोन्वभूदिति स श्रुतदेवस्तर्कयामास॥४२॥ सूपविष्टानिति ॥ भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः सभार्य इति सविसर्गपाठे भार्यया सहितः स्वजनामात्य इति पाठे स्वजनाः सुता एवामात्या यस्य सः श्रुतदेवः कृतमातिथ्यं पूजादि येषां तान् सुखेनोपविष्टान् मुन्यादीन् उपस्थितः समीप उपविष्टः कृष्णस्याङ्घ्री अभिमृशति संमर्दयतीत्यङ्घ्र्यभिमर्शनः सन्नुवाच ॥४३॥ नेति ॥ परमपूरुषः पुरुषोत्तमो भवानद्यैव प्राप्तः । यद्वा । यर्हीदं प्रविष्टः तदैव नोऽस्माकं दर्शनं प्राप्तः इति स एव सन्मात्रो भवान् नत्वद्य नाद्यतनीभूतस्त्वमित्यर्थः ॥ ४४ ॥ यथेति ॥ आत्मनस्तव मायया मोहितेन मनसा यथैक एव शयानः पुरुषः परम् अस्माज्जाग्रद्देहाद्विलक्षणं स्वाप्नं लोकं देवतिर्यङ्मनुष्यादिदेहसमूहं सृष्ट्वा तमनुविश्य नानावभासते तद्वत् त्वमपि नानावभासि ॥ ४५ ॥

शृण्वतामिति ॥ शश्वन्निरन्तरम् एव त्वां गदताम् अर्चतामभिवन्दताम् शतार्षः । अत एवामलात्मनां नृणामपि त्वं हृद्येव भासि मम तु लोचनगोचरोऽपि जात इत्यहो मम भाग्यमिति भावः ॥ ४६ ॥ हृदिस्थोऽपीति ॥ कर्मभिः लौकिकवैदिकव्यापारैर्विक्षिप्तं चेतो येषां तेषां हृदिस्थोऽप्यदिदूरस्थ एव आत्मशक्तिभिरहङ्कारादिभिः अग्राह्यो व्यवहितोऽपि उपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कारः आत्मान्तःकरणं येषां तेषां तु आच्छादकाहङ्कारादिनिवृत्तेः अन्ति समीपे अव्यवहित एव त्वमित्यर्थः ॥ ४७ ॥ नम इति ॥ अध्यात्मविदां ब्रह्मात्मैकत्वं पश्यतां निवृत्तदेहाद्यहङ्काराणां परमात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदाय अनात्मने देहाद्यभिमानिने जीवाय तु परमात्मत्वेनाप्रकाशमानत्वात् स्वात्मनः सकाशात् विभक्तः समर्पितो मृत्युः मृत्यूपलक्षितः संसारो येन तस्मै सकारणं महदादिकार्यम् अकारणं प्रकृतिः तदुभयं लिङ्गमुपाधिं नियम्यतया ईयुषे प्राप्तवते हे स्वमायया असंवृत अलुप्तैश्वर्यरुद्धा मायावित्वादन्येषामावृता दृष्टिर्येन तस्मै । यद्वा । स्वमायया स्वस्यासंवृता अन्येषां रुद्धा दृष्टिर्येनेत्येकं पदम् ।

शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवन्दताम् ॥ नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥ हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥ ४७ ॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिङ्गमीयुषे स्वमाययाऽसंवृतरुद्धदृष्टये ॥ ४८ ॥ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः ॥ ४९ ॥ श्रीशुक उवाच ॥ ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥ श्रीशुक उवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरन्ति मया लोकान्पुनन्तः पादरेणुभिः ॥ ५१ ॥ देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥

यद्वा । स्वमायया संवृतानां मोहितानां रुद्धा स्वविषयिका दृष्टिर्ज्ञानं येन तस्मै तुभ्यं नमः ॥ ४८ ॥ स त्वमिति ॥ स उक्तविधः परमेश्वरस्त्वं स्वभृत्यान्नोऽस्मान् शाधि आज्ञापय । हे देव तवेष्टं वयं किं करवामेति यत् यदा भवानक्षगोचरो भवेत् एतदन्तः एतत्पर्यन्त एव नृणां क्लेशो भवति ॥ ४९ ॥ तदिति ॥ इत्येवं तदुक्तं श्रुतदेवोक्तमुपाकर्ण्य श्रुत्वा प्रणतार्तिहा भगवान् स्वपाणिना तत्पाणिं गृहीत्वा हेति हर्षेण प्रहसंस्तमुवाच ॥ ५० ॥ स्वस्तुतिमाकर्ण्य स्वभक्तानां ब्राह्मणानां स्तुतिमनाकर्ण्य लोकसङ्ग्रहाय ब्राह्मणान् प्रशंसन्नाह—ब्रह्मन्निति ॥ ब्रह्मन् मया हृदि स्थितेन हेतुभूतेन स्वपादरेणुभिर्लोकान्पुनन्तो ये संचरन्ति तानेतान् मुनीन् तवानुग्रहार्थायेह प्राप्तान्विद्धि ॥ ५१ ॥ देवा इति ॥ देवाः प्रतिमाः क्षेत्राणि अयोध्यामथुरादीनि तीर्थानि गङ्गादीनि दर्शनादिभिः शनैर्महता कालेन पुनन्ति एते तु सद्यः किं च देवादीनि यत्पुनन्ति तदपि पावित्र्यमर्हत्तमानामीक्षया दर्शनमात्रेण सद्य एव भवति ॥ ५२ ॥

ब्राह्मण इति ॥ इह संसारे सर्वेषां प्राणिनां मध्ये ब्राह्मणो जन्ममात्रेणैव श्रेयान् तप आदिभिर्युक्तो मत् मम कलापरिकलनमुपासना तया युक्तः ब्राह्मणः श्रेयानिति किमु वक्तव्यम् ॥ ५३ ॥ नेति ॥ किं बहुना मदुपासकाद्ब्राह्मणात् एतत् द्विभुजं चतुर्भुजं च रूपं मम दयितं प्रियं न भवति तत्र हेतुः सर्वेति स्पष्टम् । अयं भावः देवाः प्रमेयरूपाः वेदा हि तत्र प्रमाणभूताः प्रमेयसिद्धेः प्रमाणाधीनत्वात् प्रमेयभूतादपि सर्वदेवमयान्मम स्वरूपात् प्रमाणभूतं विप्ररूपं प्रियमित्यर्थः ॥ ५४ ॥ दुष्प्रज्ञा इति ॥ एवं पूर्वोक्तं मम मतमविदित्वैव असूयवः ब्राह्मणेषु दोषदर्शिनः अर्चा प्रतिमा आदिपदेन तीर्थग्रहणं तत्रैवेज्यदृष्टयः पूज्यताबुद्धिमन्तः नतु ब्राह्मणेषु पूज्यबुद्धयः दुष्प्रज्ञा जना गुरुं पूज्यमात्मानं विप्रं विप्ररूपं माम् अवजानन्ति ॥ ५५ ॥ चराचरमिति ॥ मदीक्षया मयैव सर्वत्रेक्षया विप्रः चराचरात्मकमिदं विश्वं तथास्य विश्वस्य हेतवो ये भावाः पदार्था महदादीनि तत्वानि तानि सर्वाणि मद्रूपाणीति चेतसि आधत्ते अतस्तदपमानं सर्वापमाने पर्यवस्यतीति ॥ ५६ ॥ तस्मादिति ॥ तस्मात् मत्सिद्धान्तस्यैवंवि-

ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥ दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याऽऽधत्ते विप्रो मदीक्षया ॥ ५६ ॥ तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ॥ एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥ श्रीशुक उवाच ॥ ॥ स इत्थं प्रभुणाऽऽदिष्टः सहकृष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

धत्वात् हे ब्रह्मन् एतान् ब्रह्मर्षीन् मच्छ्रद्धया मयि या श्रद्धा आदरस्तेनार्चय एवं चेत् तानर्चयसि चेत् अद्धा साक्षादहमर्चितोऽस्मि भवामि अन्यथा एतदर्चनं विना तु भूरिभूतिभिः पुष्कलोपचारैरप्यर्चितो नैव भविष्यामि । एतानिति सर्वभक्तोपलक्षणम् ॥ ५७ ॥ स इति ॥ प्रभुणा श्रीकृष्णेनेत्थमादिष्टः स श्रुतदेवो मैथिलो बहुलाश्वश्च कृष्णेन सहितान् द्विजोत्तमान् एकात्मभावेन अभेददृष्ट्या आराध्य सतां गतिं भगवन्तमेवाप ॥ ५८ ॥ एवमिति ॥ हे राजन् भक्तेषु भक्तिमान् प्रीतियुक्तो भगवान् स्वभक्तयोः श्रुतदेवबहुलाश्वयोः सतां स्वतः प्रमाणभूतानामप्रामाण्यकारणरहितानां वेदानां मार्गं निराकारसाकारोभयविधब्रह्मपरत्वमुपदिश्य कतिपयदिनानि मिथिलायामुषित्वा पुनर्द्वारवतीमगात् ॥ ५९ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे षडशीतितमे व्यधात् ॥ ८६ ॥

आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन् पदेऽस्तु मम चित्तमगोचरेऽपि ॥ यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति ॥ १ ॥ यावन्निरञ्जनमजं पुरुषजरन्तं संचिन्तयामि सकले जगति स्फुरन्तम् ॥ तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥ २ ॥ प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या ॥ गङ्गासहायजरठो हरितोषहेतोर्वेदस्तुतेर्विवरणं सुगमं तनोति ॥ ३ ॥ सप्ताशीतितमे वेदैः सगुणो निर्गुणो हरिः ॥ बहुधा स्तूयते स्मात्र श्लोकाः सार्द्धाः खमार्गणाः ॥ अष्टौवाचेति सार्द्धा च त्र्यशीतिः स्युरनुष्टुभः ॥ ८७ ॥ पूर्वाध्यायान्ते स्वभक्तयोः सन्मार्गमादिश्येत्युक्तं तत्र नृपः पृच्छति—ब्रह्मन्निति ॥ हे ब्रह्मन् अनिर्देश्ये जात्यादिना निर्देष्टुमशक्ये निर्गुणे सदसतः कार्यात्कारणाच्च परे असङ्गे ब्रह्मणि गुणैर्वृत्तिर्यासां ताः प्राकृतगुणैर्जात्यादिभिः प्रवर्त्तमानाः श्रुतयः साक्षात् मुख्यया वृत्त्या कथं चरन्ति प्रवर्त्तन्ते। साकारे श्रीकृष्णाख्ये ब्रह्मणि च सर्वप्रत्यग्रूपत्वादिदन्तया इयत्तया च निर्देष्टुमशक्ये "हरिर्हि निर्गुणः साक्षात्" इत्यादिवक्ष्यमाणात् "सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।" इति विष्णुपुराणाच्च प्राकृतगुणरहिते सदसतः परे च कथं प्रवर्त्तन्ते अयं भावः । श्रुतयो हि शब्दरूपाः। शब्दवृत्तिस्तावत्त्रेधा। मुख्या गौणी लक्षणा च। मुख्यैव शक्तिरभिधा चोच्यते। सा च योगेन रूढ्या योगरूढिभ्यां चेति त्रिधा। तत्र अवयवशक्तिर्योगस्तेन त्रिधा कृत्तद्धितसमासभेदात्। यथा पाचकः दाशरथिः राजपुरुषः समुदायशक्ती रूढिः तया यथा गौः घटः योगरूढिभ्यामपि कृदादिभेदात्त्रिधा। यथा छत्रम्। अत्र छादनरूपयोगार्थेन आतपत्रमर्थः

परीक्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

केवलेनानेन वस्त्रादौ प्रसक्तिवारणाय। रूढिरपि तद्धिते यथा वर्णी। अत्र योगार्थवर्णवत्त्वाद्ब्रह्मचारी अर्थः॥ गृहस्थादिवारणाय रूढिरपि समासे। यथा पङ्कजम्। अत्र पङ्कजनिकर्तृरूपयोगार्थेन कमलमर्थः। कुमुदादिवारणाय रूढिरपीति संक्षेपः। परे तु मुख्या वृत्तिः जातिसंकेतयोगैस्त्रेधा। तत्र जातिशब्दाः गौः घटः अश्वकर्ण इत्याद्याः। शुक्लादयो गुणवाचका अपि जातिशब्दा एव। संकेतशब्दाः डित्थः डवित्थ इत्याद्याः। योगस्त्रेधा कृत्तद्धितसमासभेदात्। आद्यौ प्रकृतिप्रत्यययोगौ द्वौ। अन्त्यः पदद्वययोगः। यथा पाठकः औपगवः पङ्कजम् इत्याचक्षते गौणी तु लक्ष्यमाणगुणयोगात्परशब्दस्य परत्र प्रवृत्तिः। यथा यजमानः प्रस्तरः सिंहो देवदत्तः। अत्र हि यजमानशब्देन लक्ष्यमाणं यजमानगतं क्रतुनिर्वर्त्तकत्वं तत्प्रस्तरेऽप्यस्ति। एवं सिंहवत्क्रौर्यं देवदत्ते। लक्षणाशब्दस्य स्वशक्यसंबद्धवृत्तिः सा द्विधा। केवललक्षणा लक्षितलक्षणा च। आद्या शक्यसाक्षात्संबद्धवृत्तिः। यथा गङ्गायां घोष इत्यत्र गङ्गापदशक्यप्रवाहसाक्षात्संबन्धिनि तीरे लक्षणा। अन्त्या तु शक्यपरम्परासंबद्धवृत्तिः। यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरघटितपरम्परासंबन्धेन मधुकरे वृत्तिः। परे तु गौणीमपि लक्षितलक्षणामेवाहुः। सिंहशब्दवाच्यसंबन्धिक्रौर्यादिसंबद्धमाणवकप्रतीतेः। पुनर्लक्षणा त्रिधा। जहत्स्वार्थाजहत्स्वार्थाजहदजहत्स्वार्था च। तत्राद्या गङ्गायां घोष इति। अत्र गङ्गापदशक्यप्रवाहस्य घोषाधारत्वासंभवात्तत्सम्बद्धे तीरे गङ्गापदस्य वृत्तिः। द्वितीया तु शोणो धावतीति।

१ अस्य टिप्पणं ग्रन्थारम्भे लिखितम्।

अत्रामूर्त्तस्य शोणगुणस्य धावनासंभवाच्छोणपदं स्वार्थमजहत्तद्वति वर्त्तते । एवं काकेभ्यो दधि रक्ष्यतामित्यत्रापि काकपदं स्वार्थमजहदपि स्वस्वेतरदध्युपघातकमा त्रे वर्त्तते । सोयं देवदत्त इति तृतीया । अत्र हि तद्देशकालविशिष्टो देवदत्तस्तच्छब्दार्थः । एतद्देशकालविशिष्ट इदंशब्दार्थः । तत्र विशिष्टयोरभेदासंभवादुभयत्र विशेषणांशं त्यक्त्वा विशेष्ये देवदत्तस्वरूपमात्रे तदिदंशब्दयोर्वृत्तिः । एवं "तत्त्वमसि, अयमात्मा ब्रह्म" इत्यादावप्येषैव लक्षणेति । क्वचिद्वाक्येऽपि लक्षणा भवति । यथा विषं भुङ्क्ष्वेति । अत्र हि विषभो-जनरूपस्वार्थपरित्यागेन शत्रुगृहे न भोक्तव्यमित्यस्मिन्नर्थे वाक्यं वर्त्तते । मतान्तराणि त्वत्र विस्तरभयान्नोच्यन्ते । तत्र जात्यादिना निर्देष्टुमशक्ये रूढिवृत्तिर्न संभवति । निर्गुणे च गौणीवृत्तिर्न संभवति सदसद्भ्यामसङ्गे च केनचिदपि सम्बन्धाभावान्न लक्षणायोगवृत्ती संभवतः । एवं च पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगात् कथमुभयविधे ब्रह्मणि श्रुतयः प्रवर्त्तन्ते । अत्र श्रुतय इत्युपलक्षणम् । निर्गुणेऽपि मनश्चरेत् इत्युपसंहारात् । तथा च ये शब्दमनसी अत्यन्तासत्येऽप्यर्थे ज्ञानं जनयितुं प्रभवतस्ते अपि यत्र ब्रह्मणि कुण्ठीभवतस्तत्र का शङ्काप्यन्यप्रमाणप्रवृत्तेरित्यनुमानादीन्यपि निराकृतानि । अथायमत्र निष्कृष्टार्थः । "निर्गुणं निष्क्रियं शान्तम्, अपाणिपादो जवनो ग्रहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिलक्षणं ब्रह्म लौकिकैः प्रत्यक्षादिभिस्तावन्नावगम्यत एव । तादृशे च केवला श्रुतिरेव प्रमाणम् । तत्र नास्तिकैः श्रुतेः प्रामाण्यमेव न स्वीक्रियते । आस्तिकेष्वपि कर्ममीमांसकाः पूर्वोक्तलक्षणं ब्रह्म नाङ्गीकुर्वते । उपनिषदां च जपोपयोगित्वमात्रं ब्रुवते । नैयायिकादयः परमेश्वरमङ्गीकुर्वन्तोऽपि तत्र निर्गुणत्वादिकं नाङ्गीकुर्वते । एवं

**श्रीशुक उवाच ॥ बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ॥ मात्राऽर्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥**

विप्रतिपत्तावपि । वयं तु श्रुतौ सम्यक् श्रद्दधानास्तादृशं ब्रह्म निस्संशयं स्वीकुर्म एव।परंतु शब्दरूपा श्रुतिः स्वयमपि तद्ब्रह्मशब्दानिर्देश्यं ब्रुवती केन व्यापारेण बोधयितुं शक्नोति । यदि च "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।" इति न्यायमालम्ब्य यथाकथंचिद्बोधकत्वं मन्येमहि तर्हि स्वानुभवेन तादृशत्वं कथं निश्चिन्वीमहि । अन्यथा श्रुतीनाम् "एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः ।" इति वाक्यसाम्यं वारयितुं कथं शक्नुयामेति ॥ १ ॥ उत्तरयति—बुद्धीति ॥ प्रभुः उपाधिपारवश्यरहितः सर्वशक्तिमांश्च भगवान् जनानां जीवानां मात्रार्थं विषयभोगार्थं भवार्थं जन्मप्रभृतिकर्मकरणार्थम् आत्मने आत्मनस्तत्तल्लोकभोगाय अकल्पनाय कल्पनानिवृत्तिरूपमोक्षाय च अर्थधर्म-काममोक्षार्थमिति क्रमेणार्थः । जनानां बुद्धीन्द्रियमनःप्राणान् असृजत् । नन्विदमुत्तरमाप्रसंख्याप्रश्ने कोविदारगुणकथनतुल्यं भातीति चेत्सत्यम् । अत्र मात्रार्थमित्यादि-प्रयोजनचतुष्टयकथनवलात् बुद्धीन्द्रियमनःप्राणानित्यस्य मात्राद्युपयोगियोग्यतारूपनानाशक्तियुक्तानिति विशेषणमपि लभ्यते । तथा च प्रकरणबलादयमर्थः । यथा पर-मेश्वरः जीवानां चतुर्विधपुरुषार्थप्राप्तये आदौ श्रुतीरसृजत् तथा विषयाद्यनुभवाय श्रुतितात्पर्यबोधाय ब्रह्मानुभवाय च तत्तद्योग्यताख्यशक्तियुक्तान्बुद्ध्यादीनसृजत् । तत्र रूपशब्दाद्यनुभवायेन्द्रियादिषु तत्तच्छक्तिः स्फुटमनुमीयते । अन्यथा जन्मान्धबधिरादीनामिव रूपशब्दादयोऽपि ब्रह्मवदविषया एव स्युः । तथा प्रकृतेऽपि श्रुतितदर्थश्रवणे

इन्द्रियाणां श्रुतस्य मीमांसया मनने मनसः तदर्थनिश्चये ब्रह्मानुभवे च बुद्धेः सर्वमूलभूतजीवने च प्राणानां शक्तिरस्त्येव । तथा च श्रवणादिद्वारा श्रुतितदर्थादि बुद्ध्वा मनसा सम्यङ् मीमांसित्वा बुद्ध्या जना ब्रह्मानुभवन्तीति । अतः श्रुतीनां ब्रह्मावबोधकत्वन्नासिद्धम् ॥ २ ॥ तदेव स्फुटमाह–सैषेति ॥ सा एषा प्रकृता ब्राह्मी उभयविधब्रह्मप्रतिपादिका उपनिषत् पूर्वेषां पूर्वजैः अतिवृद्धैः सनकादिभिः धृता ब्रह्ममीमांसाप्रणेतृभिर्निर्णीतार्था वा । इदानींतनोऽपि यस्तां श्रद्धया आदरेण श्रवणमनननिदिध्यासनैर्धारयेत्सः अकिञ्चनः निरस्तदेहाद्यभिमानः सर्वतो विरक्तो वा सन् क्षेमं मोक्षं गच्छेत् । श्रुत्युक्तं ब्रह्मानुभवेद्वा तत्रायं ब्रह्ममीमांसानिर्णीतोऽर्थः । "यः सर्वज्ञः सर्ववित्, यस्य ज्ञानमयं तपः, सर्वस्य वशी सर्वस्येशानः, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, सोऽकामयत बहुस्याम्, तत्तेजो असृजत, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादयः श्रुतयः सगुणं गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं कर्मफलदं समस्तकल्याणगुणं भगवन्तं प्रायशः प्रतिपादयन्ति । तादृशं च ध्यानादिभिर्मनो विषयीकरोति । "विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतयस्तापिन्यादिश्रुतयश्च मुख्यवृत्त्या वृत्तिज्ञानादिकं प्राकृतभक्तवात्सल्यादिगुणांश्च प्रतिपादयन्त्यो लक्षणया ज्ञानादिस्वरूपमप्राकृतस्वरूपभूतचिद्रूपगुणं च ब्रह्म प्रतिपादयन्ति । तथाभूतेश्वरतां च संसारिणो जीवस्य तन्निवृत्तये तत्वमसीत्यादिवाक्यानि लक्षणया बोधयन्ति । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधनउपयोगान्निर्गुण एव पर्यवसानम् । "न चासङ्गो ह्ययं पुरुषः" इति श्रुतेः । ब्रह्मणि केनचिदपि संबन्धाभावात्कथं लक्षणापीति वाच्यम् । श्रुतेः संयोगसमवा-

सैषा ह्युपनिषद्ब्राह्मी पूर्वैषां पूर्वजैर्धृता ॥ श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥

यादिसंबन्धनिषेधपरत्वेनाध्यासिकसंबन्धस्य सत्वात् तस्याप्यनङ्गीकारे संबन्धहीनस्य बुद्ध्यादिजगत्कर्तृत्वोपादानत्वाभावेन जगदभावापत्तेः । सत्यसंबन्धाभावेप्याध्यासिकसंबन्धमात्रेण लक्षणया श्रुतीनामद्वितीयब्रह्मबोधनयोग्यतायाः प्रभुणा सृष्टत्वात् । अत्र च प्रमाणम् "तं त्वौपनिषदं पुरुषं पृच्छामि, नावेदविन्मनुते तं बृहन्तम्, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिवचनान्यथानुपपत्तिरेव । "यतो वाचो निवर्तन्ते, विष्णोर्नु कं वीर्याणि प्रवोचम्, भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्" इत्यादिना मुख्यवृत्तेः पराकृतत्वात् । एवं श्रुत्यादिसर्वशब्दप्रमाणजन्यसाक्षात्काररूपवृत्तिव्याप्यतया वृत्तिकृताज्ञाननिवृत्त्यधिकरणताख्यया मनःप्रवृत्तिरप्युपपद्यते मनसैवानु द्रष्टव्यम् । "दृश्यते त्वग्र्यया बुद्ध्या बुद्धिग्राह्यमतीन्द्रियम् ।" इत्याद्युक्तेः । "यन्मनो न मनुते" इत्यादिश्रुतेस्तु न वृत्तिप्रकाशेन ब्रह्म प्रकाश्यते स्वयं प्रकाशत्वात् । सूर्यादिना दीपादेरिव तत्प्रकाशेन वृत्तिप्रकाशस्य प्रतिहतत्वाच्चेत्यर्थकत्वात् । श्रीकृष्णाख्यब्रह्मणि तु चक्षुरादिजन्यवृत्तिव्याप्यतापि "विदितोऽसि भवान् साक्षात्, स एव यद् दृग्विषये स्वयं स्थितः" इत्याद्युक्तेः । न च गुणकार्यप्राकृतरूपादिरहितकृष्णब्रह्मविषयकवृत्तिश्चक्षुरादिभिः कथं जन्यत इति वाच्यम् । चक्षुरादेस्तद्योग्यताया अपि भगवता सृष्टत्वात् । अकल्पनं श्रीकृष्णब्रह्म ज्ञापयितुं प्रभुश्चक्षुरादीन्द्रियाणि तद्योग्यतावन्त्यसृजदित्यस्यप्यार्थस्योहनीयत्वात् । अत्र च निर्गुणत्वदृग्विषयत्वबोधकवाक्यद्वयानुपपत्तिरेव मानत्वात् ।

एवं सति " स एव यद् दृग्विषये स्वयं स्थितः।" इत्यादेः " न संदृशे तिष्ठति रूपमस्य, पराञ्चि खानि व्यतृणत्" इत्यादिना तत्र तत्रातीन्द्रियत्वोक्त्या चेन्द्रियजन्यज्ञानागोचरत्वार्थकाधोक्षजत्वसमाख्यया च न विरोधः। उक्तविधे वृत्तिव्याप्यत्वे फलव्याप्यत्वाभावे च यथायथं तात्पर्यादिति दिक्॥ ३॥ अत्रेति ॥ अत्र विषये नारायणः वक्तृत्वेनान्वितो यस्यां नारायणे ब्रह्मणि अन्वितां वा तां गाथाम् इतिहासरूपां ते तुभ्यं वर्णयिष्यामि। तत्र ऋषेर्नारदस्य नारायणस्य संवादं वर्णयिष्यामि ॥ ४ ॥ एकदेति ॥ लोकान् पर्यटन् भगवत्प्रियो नारद एकदा सनातनं पुरातनमृषिं नारायणं द्रष्टुं तस्याश्रमं बदर्याख्यं ययौ ॥ ५ ॥ य इति ॥ अस्मिन् भारतवर्षे यः श्रीनारायणः नृणां क्षेमाय ऐहिकसुखाय स्वस्तये आमुष्मिकमङ्गलाय लोकशिक्षार्थं धर्मोदयादिरूपः ज्ञानम् आत्मतत्त्वज्ञानं शमो वैराग्यं तैरुपेतं युक्तं तपः आकल्पात् ब्रह्मदिनारम्भप्रभृति स्वयमेव आस्थितः कुर्वन् वर्त्तते ॥ ६ ॥ तत्रेति ॥ हे कुरूद्वह तत्र स्वाश्रमे उपविष्टं कलापग्राम इति तदाश्रमस्य नामान्तरं तद्वासिभिः ऋषिभिः परीतमावृतं नारायणं प्रणतः सन्नारदः इदमेव ब्रह्मणि श्रुतयः कथं चरन्तीति यत्त्वं पृच्छसि तदेव अपृच्छत् ॥ ७ ॥ तस्मै इति ॥ तस्मै पृच्छते नारदाय अन्येषामप्यृषीणां शृण्वतां सतां भगवान्

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम्॥ नारदस्य च संवादमृषेर्नारायणस्य च ॥४॥ एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम्॥५॥ यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम् ॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः॥६॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥ श्रीभगवानुवाच ॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ तत्र ह्ाऽयमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥

नारायण इदमवोचत्। किमवोचत्तत्राह य इति। जनलोकनिवासिनां पूर्वेषां वृद्धानां सनकादीनां यः ब्रह्मणि विषये वादः तत्वबुभुत्सुकथारूपः प्रश्नोत्तराभ्यां निर्णयः अभूत्तदिदमिति संबन्धः ॥ ८ ॥ स्वायम्भुवेति ॥ हे स्वायम्भुव पुरा पूर्वं जनलोके तत्रस्थानां मानसानां ब्रह्मणो मनसो जातानामूर्ध्वरेतसां नैष्ठिकब्रह्मचारिणां मुनीनां ब्रह्मसत्रमभवत्। यथा समाना एव यजमाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति फलमपि तेषां तुल्यमेव भवति तत्कर्म सत्रमिति प्रसिद्धम्। तथा यत्र समाना एव साधवः निःसंदिग्धब्रह्मज्ञानार्थं वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तत् ब्रह्मसत्रमिति ज्ञेयम् ॥ ९ ॥ श्वेतद्वीपमिति सार्द्धम् ॥ तदीश्वरं श्वेतद्वीपवासिनमीश्वरमनिरुद्धमूर्तिं द्रष्टुं त्वयि श्वेतद्वीपं गतवति सति यत्र विचारे श्रुतयः शेरते अर्थतो निर्णीता भवन्ति स ब्रह्मवादः ब्रह्मविचारः संप्रवृत्तः। तत्र जनलोके यं प्रश्नं मां प्रति त्वं करोषि तदयं प्रश्नोऽभूत् ब्रह्मवाद इत्यर्द्धमसार्वत्रिकमाहुः ॥ १० ॥

तुल्येति ॥ तुल्यानि श्रुतानि अध्ययनादीनि तपांसि जितेन्द्रियत्वादीनि शीलानि स्वभावाश्च येषां ते तथा । सर्वत्र ब्रह्मदर्शनेन तुल्याः स्वीयामित्राणि अरयः शत्रवः मध्यमाः उदासीना उपेक्ष्याश्च येषां ते यद्यपि सर्वे प्रवचनयोग्यास्तथापि ब्रह्मविचारार्थमेकं सनन्दनं प्रवचनं प्रवक्तारं चक्रुः । अपरे सनकादयः शुश्रूषवो बभूवुः पप्रच्छुरित्यर्थः॥११॥ अत्र उभयविधब्रह्मविषयकप्रश्नेऽपि प्रायशः साकारब्रह्मविषयकश्रुत्यर्थोदाहरणेनोत्तरयन् सनन्दन उवाच—स्वसृष्टमिति ॥ स्वेन सृष्टमिदं विश्वमापीय संहृत्य शक्तिभिः सूक्ष्मावस्थामापन्नाभिः प्रकृतिपुरुषकालादिभिः सह शयानं निद्राणमिव वर्तमानं परं परमपुरुषं भगवन्तं तदन्ते प्रलयान्ते प्रथमनिश्वासादाविर्भूताः श्रुतयः श्रुत्यधिष्ठात्र्यो देवताः स्वाधिकारकार्यतया तल्लिङ्गैः तत्प्रतिपादकवाक्यैर्बोधयांचक्रुः प्रबोधयामासुः ॥१२॥ यथेति ॥ सम्राजं चक्रवर्तिनं राजानं शयानं प्रत्यूषेऽभ्येत्य प्रातःकाले आगत्य अनुजीविनः बन्दिनः स्तावकाः सुश्लोकैः शोभना श्लोकाः कीर्त्तयो येषु तैः तत्पराक्रमबोधकवचनैर्यथा बोधयन्ति तथा बोधयांचक्रुरिति । अत्र भागवताः । सर्वेश्वरे श्रीकृष्ण एवास्य स्तवस्य समन्वयो ज्ञाप्यते तल्लीलामहाप्रकरणान्तःपातात् निभृतमरुन्मनोक्षेत्यादिलिङ्गात्। कृष्णं च तत्र छन्दोभिः स्तूयमानमित्यन्यत्र वाक्यात्। एतच्छ्रुत्वा नारदेन कृष्णायेति कृष्ण-

**तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥**

**सनन्दन उवाच ॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ॥ तदन्ते बोधयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १२ ॥**

**यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥**

**श्रुतय ऊचुः ॥ जय जय जह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः ॥**

**अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥ १४ ॥**

पदश्रुत्यैव तस्य नमस्कृतत्वाच्चेति संक्षेपः ॥१३॥ तत्र सर्वाः श्रुतयस्तत्तद्वर्गभेदेनाष्टाविंशतिधा भूत्वाऽष्टाविंशत्या पद्यैः स्तुवन्ति । अत्रैतेष्वेव पद्येषु सर्वासां श्रुतीनां परमेश्वरविषयाणां तात्पर्यसङ्ग्रहः । तत्रादौ बन्दिजनोचित जयाशंसनपूर्वकं सर्वशास्त्रविधेयभूतमविद्यानाशनं प्रार्थयन्ते—जय जयेति ॥ भो अजित हे अगजगदोकसामखिलशक्त्यवबोधक त्वं जय जय दोषगृभीतगुणाम् अगजगदोकसामजां जहि । यत् यतः त्वम् आत्मना समवरुद्धसमस्तभगः असि। क्वचित् अजया आत्मना च चरतस्ते निगमः अनुचरेत् इत्यन्वयः औचित्यादगजगदित्यस्यावृत्तिः । भो अजित अगानि स्थावराणि जगन्ति जङ्गमानि ओकांसि शरीराणि येषां तेषां जीवानां या अखिलाः कर्मज्ञानादिकाः शक्तयस्तासामवबोधकत्वं जय जय उत्कर्षमाविष्कुरु । केन व्यापारेणेत्याशङ्क्याहुः । दोषगृभीतगुणां दोषाय आनन्दाद्यावरणाय गृभीता गृहीता गुणाः सत्वादयो यया तामित्यर्थः । "हृग्रहोर्भश्छन्दसि" इति भकारः । एवंभूताम् अगजगदोकसामजामविद्यां जहि नाशय । यथेयं पुनर्जीवान्न दुनुयात् तथा कुर्वित्यर्थः । अजामात्रहनने हरेस्तवकः प्रयासः निरन्तराह्ला-

दिसंवित्कामधेनुवृन्दपतेस्तव किं वाजयाकृत्यमित्याहुः । यत् यतः त्वम् आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः सम्प्राप्तसमस्तैश्वर्यादिगुणोऽसि । उक्तेऽर्थे त्वहमेव प्रमाणमित्याहुः । क्वचिदिति क्वचित् कदाचित् सृष्ट्यादिसमये अजया मायया शक्त्या चरन्तं क्रीडन्तं "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म" इत्यादिः । तथात्मना स्वरूपेण च वर्तमानम् "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म" इत्यादिर्निगमो वेदसमूहस्त्वामनुचरेत् प्रतिपादयेत् ।ते चरत इति शेषे कर्मणि षष्ठ्यौ। निराकारसाकारब्रह्मणोः समानमिदं पद्यम्।तथा च हे प्रभो स्थावरजङ्गमात्मकानां स्वरूपावरणकरीमविद्यां नाशयित्वा उत्कर्षमाविष्कुरु।इयं हि स्वैरिणी इव परप्रतारणाय गुणान् गृह्णाति अतो गुणवन्त्यपि हन्तव्या । त्वं च स्वरूपेणैवाप्तसमस्तैश्वर्योऽस्यतस्त्वयि दोषं नो वक्ष्यति नापि तवानया कृत्यं नापि तन्नाशे तव प्रयासः । जीवानां च कर्मज्ञानादिशक्तयस्त्वदधीना अतो जीवाः स्वयं तां हन्तुमशक्ताः । अत्र विषये चाहं श्रुतिरेव त्वां प्रतिपादयन्ति प्रमाणमस्मीति स्फुटोऽर्थः । नीलकण्ठचतुर्द्धरास्तु जय जयेत्यादि जीवं सम्बोध्य प्रकल्प्य व्याचक्षते ॥ १४ ॥ ननु कथं श्रुतयो मामेव प्रतिपादयन्ति "यत इन्द्रो जातोवसितस्य राजा अग्निर्मूर्द्धा दिवः सोमः पवते जनिता मतीनाम्" इत्यादिश्रुतय इन्द्रादीनपि प्रतिपादयन्तीत्याशङ्क्याहुः—बृहदिति ॥ घटादिविकृतिर्मृत् एव इतीव अवशेषतया हेतुना ऋषयः एतदुपलब्धं

बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ॥
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥

बृहदेवेति अवयन्ति अविकृतात् यतो बृहतो विकृतेः उदयास्तमयौ भवतः अतस्ते ऋषयः मेनोवचनाचरितं त्वय्येव दधुः । यतः नृणां कुत्रापि दत्तपदानि भुवि अयथा कथं भवन्ति इत्यन्वयः । यथा लोका अपि घटादिमृद्विकारजातं मृदेव इति जानन्ति तथैव अवशेषतया सर्वनाशेऽप्यवशिष्यमाणतया हेतुना ऋषयो मन्त्रास्तद्द्रष्टारो वा एतदुपलब्धं दृष्टं श्रुतं च स्थावरजङ्गमात्मकमिन्द्रादिकञ्च सर्वं बृहत् ब्रह्मत्वमेवेत्यवयन्ति जानन्ति उपादानत्वेपि अविकृतात् मणिमन्त्रादिवत्स्वयं विकाररहितात्वत उपादानभूतात् ब्रह्मणो विकृतेः विकारमात्रस्य सर्वस्य कार्यस्योदयास्तमयौ उत्पत्तिप्रलयौ भवतः । अविकृतादित्यनेन विकारवतो मृदादेर्ब्रह्मणो वैलक्षण्यं सूचितम् । अत्र वाशब्द उपमार्थः । यथा घटादेर्मृदि उदयास्तमयौ तद्वदिति स्वामिपादाः । अत्र यत इति तसेः सार्वविभक्तिकत्वात्तन्त्रेण पञ्चमीसप्तम्योरुभयोः प्रयोगो ज्ञेयः।यस्मादुत्पत्तिः यस्मिंश्च प्रलयो भवतीत्यर्थः । तथा च श्रुतिः । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् "एकं सद्विप्रा बहुधा वदन्ति,सर्वं खल्विदं ब्रह्म" इत्यादि ।अत उपादानत्वेन सर्वात्मकत्वादेव ऋषयो मनोवचनाचरितं त्वय्येव दधुः । मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च धृतवन्तः निश्चितवन्तः न पृथक् विकारेष्वित्यर्थः । "येप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो। सर्व एव भजन्ति त्वां सर्वदेवमयेश्वरम् ॥" इत्यादिवचनात् सर्वस्य कार्यस्य कारणं त्वां विनात्यन्ताभावात्तद्वर्णनं त्वय्येवपर्यवसितमिति भावः । तत्र दृष्टान्तः कथम-

यथेति । नृणां भूचराणां यत्र कुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि अयथा अदत्तानि कथं भवन्ति । तथा च यथा मृत्पाषाणेऽष्टकादिषु दत्तान्यपि पदानि भुवं न व्यभिचरन्ति तथा यत् किमपि इन्द्रादिविकारजातं वदन्तो वेदा स्वामेव सर्वकारणतया परमार्थभूतं प्रतिपादयन्ति ॥१५॥ इतीति ॥ हे त्र्यधिपते इति पूर्वोक्तहेतोः सूरयः तव अखिललोकमलक्षपणकथामृताब्धिम् अवगाह्य तपांसि जहुः । हे परम यदि कथाश्रवणमात्रेणैवं तदा ये पुनः स्वधाम विधुताशयकालगुणाः सन्तः अजस्रसुखानुभवं ते पदं भजन्ति ते तपांसि जहतीति किमुत वक्तव्यमित्यन्वयः । हे त्र्यधिपते त्रिगुणमायामृगीनर्तक त्वमेव सर्वकारणत्वेन परमार्थत्वाद्भजनीय इति कृत्वा सूरयो विवेकिनस्तवाखिलानां लोकानां श्रवणकीर्तनादिपराणां जनानां मलं वासनापर्यन्तं कर्मदोषं क्षपयति नाशयतीति तथाभूता कथैवामृतं तस्याब्धिमवगाह्य निषेव्य तपन्तीति तपांसि आध्यात्मिकादिदुःखानि जहुः त्यक्तवन्तः । यदा त्वदीयकथाश्रवणकीर्त्तनादिमात्रेणापि सर्वसंतापनिवृत्तिस्तदा हे परम ये पुनः स्वधाम्ना स्वरूपसाक्षात्कारेण विधुतास्त्यक्ता आशयगुणाः अन्तःकरणधर्मा रागादयः कालगुणा जरादयः उपलक्षणमेतत् । देहधर्माः कार्श्यादयः प्राणधर्माः क्षुधादयः इन्द्रियधर्माः काणत्वादयश्च यैस्तथाभूतास्तवाजस्रसुखानुभवं नित्यानन्दचिदात्मकं पदं स्वरूपं भजन्ति सेवन्ते ते तपांसि त्यजन्तीति किमुत वक्तव्यमिति । "तद्यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवैवंविदि पापं कर्म न श्लिष्यते"

**इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ॥ किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥१६॥ दृतय इव श्वसन्त्यसुभृतो यदि ते नु विधा महदहमादयोऽण्डमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥**

इत्यादिश्रुतेः । साकारपक्षे स्वधाम्ना स्वप्रभावेणैव यद्वा स्वस्य स्वीयप्रभोस्तव धाम्ना चैतन्यमूर्तिस्फुरणेन विधुताशयकालगुणास्सन्तस्ते पदं चरणकमलं सेवन्ते इत्याद्यपि । अत्र श्रुतयः । "विष्णोर्नु कं वीर्याणि प्रवोचम्, विष्णोः कर्माणि पश्यत" इत्याद्याः ॥ १६ ॥ दृतय इवेति ॥ सर्वे जना दृतय इव वृथा श्वसन्ति । यदि च ते तवानुविधाः स्युस्तदा एव असुभृतः भवन्ति । यस्य तव अनुग्रहतः महदहमादयः अण्डम् असृजन् यः पुरुषविधः अत्रान्नमयादिषु अन्वयश्च अन्नमयादिषूपदिश्यमानेषु चरमः स त्वं तथा । यत् सदसतः परं एष्वन्नमयादिषु अवशेषम् ऋतं च तत् त्वमित्यन्वयः । यद्वा । यदि यद्यपि असुभृतः ते अनुविधास्तथापि दृतय इव पारतन्त्र्येण श्वसन्ति शेषः प्राग्वदेवान्वयः । मनुष्यादयः दृतय इव अग्निज्वलनसाधनभूतचर्माणीव वृथा श्वसन्ति । यदि च ते तवानुविदधत्यनुवर्तन्त इत्यनुविधाभक्ताः स्युस्तदैव ते असुभृतः प्राणभृतः सफलश्वासा भवन्ति इत्यर्थः । स्वामिपादास्तु असुभृतः यदि तेऽनुविधास्तदा सफलं श्वसन्ति अन्यथा दृतय इव श्वसन्तीत्यन्वयमाहुः । यदि च वाक्यद्वयसंभवे वाक्यत्रयकल्पनाक्लेशो विभाव्येत तदा असुभृतो यदि तेऽनुविधा विमुखाः स्युः तदा दृतय इव श्वसन्तीत्यन्वयः । विधीयन्ते शास्त्रेणेति विधाः भगवद्भजना-

व्यास्ताभिर्हीना अनुविधाः प्रादिसमासः । "अनु हीने च सादृश्ये" इति विश्वः । यद्वा । अनुशयिता द्वेषवती विधा कृतिर्येषां तेऽनुविधाः "प्रादिभ्यो धातुजस्य" इति बहुव्रीहिः । "भवेदनुशयो द्वेषे" इति विश्वः । यद्वा । जना यदि ते विधाः भजनादिप्रकारान् अनुलक्षीकृत्य भजनादीनाम् असुभृतो भवन्ति सुष्ठु धारका न भवन्तीत्यर्थः । तदा दृतय इव श्वसन्तीति । नीलकण्ठचतुर्धरास्तु महदहमादयस्तवानुग्रहतो यदण्डमसृजन् तदनुविधा यदि असुभृतः स्युस्तर्हि दृतय इव श्वसन्तीत्यन्वयमाहुः । यस्य तवानुप्रवेशलक्षणादनुग्रहाल्लब्धसामर्थ्या महदहमादयश्चित्ताहङ्कारबुद्धिमनःश्रोत्रचक्षुरादयो देहद्वयारम्भकाः जडा अपि अण्डं समष्टिव्यष्टिदेहं ब्रह्माण्डम् असृजन् अतः सर्वकारणस्य तव भजनं विना कृतघ्ना जना वृथा श्वसन्ति । यद्वा । यदीति यद्यपीत्यर्थे । "मन्यसे यद्युपशमं स्नेहपाशनिकृन्तनम् ।" इति षष्ठस्कन्धवत् । तथा च यदि यद्यपि असुभृतः प्राणाद्युपाधयः जीवाः ते तवानुविधाः ज्ञानादिमत्तया त्वदनुकारिणस्तथापि दृतय इव पारतन्त्र्येण श्वसन्ति नतु तेषां कुत्रापि स्वातन्त्र्यं यतः महदहमादयोऽपि तवानुप्रवेशलक्षणानुग्रहत एवाण्डमसृजन् इति यः त्वं चिदेकरसोऽपि पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य सः तत्तदाकारः सन् यश्चेतयसे सत्त्वं तत्र हेतुः अत्रान्नमयादिषु कारणत्वेन अन्वेतीत्यन्वयः । अतस्तदाकारता वस्तुतोऽन्नमयादिषूपदिश्यमानेषु यश्चरमः ब्रह्म पुच्छं प्रतिष्ठा रसो वै स इति पुच्छत्वेन रसत्वेन चोक्तः सत्वं तस्या-

**उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ॥**
**तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥**

सङ्गत्वमाह । यत् सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तमसङ्गम् एषु अन्नमयादिषु अवशिष्यत इत्यवशेषं परमचरममबाध्यमृतं सत्यं चेति तत् त्वम् । अत्र छन्दःस्वारस्यमपेक्षमाणाः नीलकण्ठचतुर्धराः सदसदतः परं त्वमसि यदेष्विति पेठुः।अन्नमयादिष्वन्वयस्तु शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थम् । तथा हि तैत्तिरीयाणामुपनिषदि "स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः" इत्यादिना स्थूलसूक्ष्मक्रमेण अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः क्रमेण पञ्च कोशा उक्ताः । तस्य पुरुषविधतामन्वयं पुरुषविध इति पुनः पुनस्तदन्वितत्वेनालक्ष्य ब्रह्मपुच्छं प्रतिष्ठेति सर्वसा क्षिशुद्धस्वरूपनिरूपणम् । साकारब्रह्मविषये तु पुरुषविधः पुरुषाकारो द्विभुजचतुर्भुजादिः ॥ १७ ॥

उदरमिति ॥ ऋषिवर्त्मसु ये कूर्पदृशस्ते उदरमुपासते । आरुणयस्तु परिसरपद्धतिं हृदयं दहरमुपासते । भो अनन्त ततः परमं तव धाम शिरः प्रतिउदगात् यत्समेत्य पुनरिह कृतान्तमुखेन पतन्तीत्यन्वयः । ऋषिवर्त्मसु ऋषीणां संप्रदायमार्गेषु कूर्पदृशः उदरं ब्रह्मेति शार्कराक्षा उपासते इति श्रुतिस्थशार्कराक्षपदस्य प्रतिपदं कूर्पदृश इति कूर्पं शर्करारजो विद्यते दृक्षु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् । ते उदरम् उदरालम्बनं मणिपूरकस्थं ब्रह्मोपासते ध्यायन्ति । तेषां स्थूलदृष्टित्वं तु उदरस्य हृदयापेक्षया स्थूलत्वाद्बोध्यम् । यद्वा । कूर्पं सूक्ष्मं सूक्ष्मदृश इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः । आरुणयः अरुणवदल्पप्रकाशस्य

मुनेः पुत्रास्तु ततोऽपि सूक्ष्मदश इत्यर्थः । ते परितः सरन्ति प्रसर्पन्ति परिसराः नाड्यः तासां पद्धतिं मार्गं प्रसरणस्थानम् । यद्वा । त्वन्निकटप्रापकं साक्षात् हृदयस्थं दहरं सूक्ष्ममेवोपासते । हे अनन्त ततो हृदयात् उपासनद्वयाद्वा तव धाम उपलब्धिस्थानं सुषुम्णाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरः मूर्द्धानं प्रति उदगात् उदसर्पत् । मूलाधारादारभ्य हृदयमध्यात् ब्रह्मरन्ध्रं प्रत्युद्गतम् । सुषुम्णामार्गेण गतिप्रकारो द्वितीयस्कन्धे उक्तः । यत्समेत्य प्राप्य पुनरिह कृतान्तस्य कालस्य मुखे संसारे न पतन्ति । तथा च श्रुतिः । "उदरं ब्रह्मेति शार्कराक्षा उपासते, हृदयं ब्रह्मेत्यारुणयो, ब्रह्मा हैवैता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत, यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः, शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका, । तयोर्ध्वमायन्नमृतत्वमेति विश्वगन्या उत्क्रमणे भवन्ति ॥" इति॥१८॥ईश्वरस्यापि जीववदुदरादिसंबन्धे तारतम्यमाशङ्क्याहुः—स्वकृतेति॥ स्वकृतविचित्रयोनिषु हेतुतया विशन्निव वर्तमानः स्वकृतानुकृतिः त्वम् अनलवत् तरतमश्चकास्सि । अथ वितथासु अमूषु योनिषु अवितथं समम् एकरसं च तव धाम अभिविपण्यवः विरजधियः अन्वयन्ति इत्यन्वयः । स्वेनैव कृतासु विचित्रासु उच्चनीचमध्यमासु योनिषु अभिव्यक्तिस्थानेषु कार्येषु देवतिर्यङ्मनुष्यादिदेहेषु हेतुतया उपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंभवाद्विशन्निव वर्तमानः स्वकृताः योनीरनुकरोति इति तथाभूतस्त्वम् अनलवत् अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण दीर्घह्रस्वस्थूलसूक्ष्मरूपोऽवभासते तथा तरतमतः उत्कृष्टापकृष्टभावेन चकास्सि अवभाससे नतु वस्तुतस्तारतम्यम् । तथा च श्रुतिः । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥इति, तत्सृष्ट्वा तदेवानुप्राविशत्" इति च । अथ अत एव वितथासु मिथ्याभूतासु अमूषु योनिषु अवितथं सर्वविकाररहितं सत्यमत एव सममविशेषं सर्वदा एकरसमेकरूपं तव धाम स्वरूपम् अभिविपण्यवः अभितो विगतव्यवहाराः "पण व्यवहारे" इत्यस्य धातो रूपं पण्युरिति । ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । विरजधियो निर्मलमतयोऽन्वयन्ति जानन्ति ॥ १९ ॥ स्वकृतेति ॥ श्रुतयः अबहिरन्तरसंवरणमपि अमीषु स्वकृतपुरेषु वर्त्तमानं पुरुषम् अखिलशक्तिधृतस्तव अंशकृतं वदन्ति वस्तुतः इति नृगतिं विविच्य भुवि वर्तमानाः कवयः विश्वसिताः सन्तः निगमावपनं अभवं भवतः अङ्घ्रिमुपासत इत्यन्वयः । बहिः कार्यमन्तरं कारणं ताभ्यामनावृतमपि अमीषु आध्यासिकसंबन्धेन स्वकृतेषु स्वकर्मोपार्जितेषु पुरेषु देवादिदेहेषु भोक्तृत्वेन वर्तमानं पुरुषं जीवमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णगुणस्य तवांशकृतम् अंश इवांशः कृत इव कृतः तादृशं त्वद्रूपं श्रुतयो वदन्ति । इत्येवं नृगतिं जीवस्य तत्वं विविच्य

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमश्चकास्स्यनलवत्स्वकृतानुकृतिः ॥ अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोन्वयन्त्यभिविपण्यव एकरसम् ॥ १९ ॥ स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ॥ इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ २० ॥

निश्चित्य भुवि वर्तमानाः कवयो विवेकिनो विश्वसिताः भगवच्चरणशरणतयैव संसारदुःखनिवृत्तिर्नान्यथेति विश्वासयुक्ताः निगमावपनं निगमोक्तकर्मणामावपनमासमन्तादुप्यन्तेस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयम् यत्र समर्पितानि कर्माणि विमुक्तिं फलन्ति तम् अत एव अभवं जन्ममरणादिसंसारदुःखनिवर्तकं भवतः अङ्घ्रिमुपासते अर्चनवन्दनादिभिः सेवन्ते । अत्र श्रुतयः । " बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति, सर्व एवात्मानो व्युचरन्ति, यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥"जीवस्य प्रतिबिम्बत्ववादेऽपि बिम्बमेव प्रतिबिम्बात्मना गृह्यते । भेदादिधर्मा एवाध्यस्ता नतु धर्मी इति ॥ २० ॥ दुरवगमेति ॥ हे ईश्वर दुरवगमात्मतत्त्वनिगमायात्ततनोः तव चरितमहामृताब्धिपरिवर्तपरिश्रमणाः तव चरणसरोजहंसकुलसङ्गविसृष्टगृहाः केचित् अपवर्गमपि न परिलषन्ति इत्यन्वयः । हे ईश्वर दुरवगमं दुर्ज्ञेयं यदात्मन स्तव तत्वं तस्य निगमाय ज्ञापनाय आत्ततनोः स्वीकृतमूर्तेस्तव चरितमेव महामृताब्धिस्तस्मिन् परिवर्तोऽवगाहस्तेन परिश्रमणाः परिरत्र वर्जने श्रमणं श्रमः गतश्रमा इत्यर्थः । यद्वा । परिवर्तः आलोडनं तत्र परिश्रमणाः कृतपरिश्रमा इत्यर्थः । तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं समूहस्तेन सङ्गः कथाश्रवणकीर्तनादिना संबन्धस्तेन विसृष्टाः त्यक्ता गृहा यैः अनेन श्रवणकीर्तने दर्शिते । तादृशाः भक्तिरसिकाः केचित् अपवर्गं मो-

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ॥ न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २१ ॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ॥ न बत रमन्त्यहो असदुपासनयाऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥**

क्षमपि न परिलषन्ति नेच्छन्ति इन्द्रादिपदं नेच्छन्तीति तु किं वक्तव्यम् । केचिदित्यनेनैवंभूतानां दुर्लभत्वं सूचितम् । श्रुतिश्च मुक्तितोऽपि भक्तेराधिक्यं दर्शयति "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च " इति व्याख्यातं च । सर्वज्ञैर्भाष्यकृद्भिः मुक्ता अपि लीलाविग्रहं कृत्वा भजन्त इति ॥ २१ ॥ त्वदिति ॥ त्वदनुपथमिदं कुलायम् आत्मसुहृत्प्रियवच्चरति तस्मिंस्त्वयि साक्षादेव आत्मनि हिते प्रिये च सदैवोन्मुखे च अहो बत तथापि ये न रमन्ति ते असदुपासनया आत्महनः यदनुशयाः कुशरीरभृतः सन्तः उरुभये भ्रमन्ति इत्यन्वयः । तव पन्थानमनुगतं जीवाख्यत्वदंशसम्बन्धं प्राप्तं परमात्मनस्तव जीवात्मना संबन्धादेव इदं कुलायं कौ पृथिव्यां लीयत इति तथा नीडरूपं शरीरम् आत्मसुहृत् प्रियवच्चरति भातीत्यर्थः । मृतशरीरे तज्ज्ञानाभावात् तत्रात्मवत्वमहंतास्पदत्वात् सुहृद्त्वं विषयार्पणेन हितकारित्वात् प्रियवत्त्वं ततस्ततः प्रीतिविषयत्वात् एवं यत्संबन्धादेव शरीरे तत्तद्ज्ञानात्प्रीतिः तस्मिंस्त्वयि साक्षादेव आत्मनि हिते प्रिये च सदोन्मुखे न तु देहवत् विषयवच्च कदाचित्पराङ्मुखेऽपि एवंभूतेऽपि त्वयि अहो आश्चर्यं बत कष्टं तथा देहवदपि ये न रमन्ति तङ्भाव आर्षः । ते असदुपासनया असतो देहादेरुपलालनेन आसक्त्येत्यर्थः । आत्महनः यस्यामसदुपासनाया-

मनुशयो वासना येषां ते कुशरीरभृतः श्वशूकरादिशरीरवन्तः सन्तः उरुभये संसारे भ्रमन्ति परिवर्त्तन्ते इत्यर्थः । तथा च श्रुतिः । "आराममस्य पश्यन्ति न तं पश्यति कश्चन। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ " इति ॥ २२ ॥

निभृतेति ॥ निभृतमरुन्मनोक्षदृढयोगयुजः मुनयः यत्तत्त्वं हृदि उपासते तदेव तत्त्वमरयोऽपि तव स्मरणात् ययुः । तथा उरगेन्द्रभोगभुजदण्डविषक्तधियः स्त्रियो गोप्यः तथा तवाङ्घ्रिसरोजसुधाः समदृशः वयमपि च ते समा एवेत्यन्वयः । निभृतानि संयमितानि मरुत् प्राणः मनश्च अक्षाणि इन्द्रियाणि च यैस्ते च ते दृढं योगं युञ्जन्तीति दृढयोगयुजश्च यद्वा निभृतैर्मरुन्मनोक्षैर्दृढयोगयुजः ते मुनयो यत्तत्वं हृदि शुद्धेन्तःकरणे उपासते ध्यायन्ति ध्यानविषये प्रवर्त्तन्ते तदेव तत्त्वमरयो दुर्भावना अपि तव स्मरणात् ययुः लिङ्व्यत्ययोगात् मुनिभ्यः पूर्वमेव ब्रह्मणि अलीयन्त । तथा उरगेन्द्रस्य शेषस्य भोगो देहस्तत्सदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः स्त्रियः गोप्योऽपि कामतो ध्यानात्तदेव तत्वं ययुः । तथा अङ्घ्रिसरोजसुधा तवाङ्घ्रिसरोजं सुष्ठु धारयन्त्यो ध्यायन्त्यः वर्णयन्त्यः समदृशः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि यद्वा गोपीरूपतां प्राप्ता वयमपि ते तव कृपाविषयतया तत्समा एवेति । इत्थम्भूतस्तव स्मरणानुभावः ये योगिनः त्वां ध्यायन्ति याश्च वयं त्वं समं पश्यामः

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥ स्त्रिय उरगेन्द्रभोगभुजदण्डवि-
षक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २३ ॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृ-
षिर्यमनु देवगणा उभये ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥

याश्च स्त्रियस्त्वां परिच्छिन्नं ध्यायन्ति ये च त्वां द्विषन्ति तान्सर्वानपि त्वामेव प्रापयतीति । अत्र चत्वारो गणा वर्णिताः । पूर्वार्द्धगतौ मुनिदैत्यगणौ यथा समप्राप्यौ तथैवोत्तरार्द्धगतौ गोपीगणश्रुतिगणौ समप्राप्यौ पृथगपिशब्दाभ्यामवगम्येते । श्रुतीनां गोपीरूपत्वं बृहद्वामने । "तुष्टोऽस्मि ब्रूत भो विज्ञा वरं यन्मनसेप्सितम् । " इति । भगवदुक्ताः श्रुतय ऊचुः । " यथा त्वल्लोकवासिन्यः कामतत्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाजनिनस्तथा ॥ " इति प्रार्थितः भगवान् । उवाच व्रजे गोप्यो भविष्यथेति ॥ २३॥

क इहेति ॥ बतेति खेदे इह जगति अग्रसरं त्वाम् अवरजन्मलयः को नु पुमान् वेदयतस्त्वत्तः ऋषिः उदगात् तदनु उभये देवगणा उदगुः यदा तु भवान् सर्वमवकृष्य शयीत तर्हि न सत् शिष्यते न चासत् न चोभयं न च कालजवः न च अन्यत्किमपि शिष्यते न च शास्त्रमप्यवशिष्यत इत्यन्वयः । बत खेदे इह जगति अग्रसरं पूर्वसिद्धं त्वाम् अवरजन्मलयः अर्वाचीनोत्पत्तिविनाशवान् पुमान् को नु वेद जानाति ज्ञानकारणाभावमाहुः । यतस्त्वत्तः ऋषिर्वेदो ब्रह्मा वा उदगात् उत्पन्नः । " यो ब्रह्माणं विदधाति पूर्वम् " इति श्रुतेः । यमनु यदनन्तरम् उभये ज्ञानकर्मोभयेंद्रियाधिष्ठातारो लोकपाश्च उदगुः । यद्वा । निवृत्तिनिष्ठाः सनकादयः प्रवृत्तिनिष्ठा मरीच्यादयश्च देवा उदगुः ।

अन्ये तु मनुजादयस्ततोऽप्यर्वाचीनाः अतः त्वत्तः पूर्वाभावात्त्वां को वेद। यदा तु भवान् प्रलये सर्वमवकृष्य उपसंहृत्य शयीत तर्हि तदा तत्र न सत् स्थूलम् आकाशादि शिष्यते न चासत् सूक्ष्मं महदादि न च उभयं सदसद्भ्यामारब्धं शरीरं चिदचिदात्मकं मनो वा न कालस्य जवो वेगो नान्यत्किमपि इन्द्रियप्राणादिसृष्ट्यादिव्यापारो वा न च ज्ञापकं शास्त्रं वेदपुराणादि अतो ज्ञानस्य दुर्लभत्वाद्भगवदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेत्याशयः। तथा च श्रुतिः। "न तं विदाथ य इमा जजानान्यद्युष्मा-कमन्तरं बभूव, को अद्धा वेद क इह प्रवोचत्, कुत आजाता कुत इयं विसृष्टिः, अर्वाग् देवा अस्य विसर्जने नाथाः, यतो वाचो निवर्त्तन्ते" इत्याद्याः॥२४॥ उपदिशतामपि भ्रमबाहुल्याज्ज्ञानन्न सुकरमित्याहुः—जनिमिति॥ ये असतः जनिं स्मरन्ति ये च सत एव मृतिं स्मरन्ति उत अपि ये च आत्मनि भिदां स्मरन्ति ये च विपणम् ऋतं स्मरन्ति ते सर्वे आरुपितैरेव उपदिशन्ति त्रिगुणमयः पुमानिति हेतुना या भिदा सा यद्यस्मात्त्वयि विषये अबोधकृता ततः अबोधात्परत्र अवबोधरसे त्वयि सः अबोधो न भवेत् इत्यन्वयः। ये पातञ्जलादयः असत एव ब्रह्मत्वस्य जनिमुत्पत्तिं स्मरन्ति। वदन्ति यद्वा ये वैशेषिकाः असतः प्रागविद्यमानस्य जगत्कार्यस्य जनिं स्मरन्ति तथा ये गौतमीयाः सतः सत्यस्यैव एकविंशतिविधस्य दुःखस्य मृतिं विनाशं मुक्तिं स्मरन्ति।ये नैयायिकसांख्यादयः भेदवादिनः आत्मनि भिदां भेदं जीवानामन्योन्यभेदं जीवब्रह्मणोर्जीवजडयोर्ब्रह्म-

**जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः॥ त्रिगुणमयः पुमानिति भिदा यदबोधकृता**
**त्वयि न ततः परत्र स भवेदवबोधरसे॥ २५॥ सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः॥**
**न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम्॥ २६॥**

जडयोर्जडजडयोश्चेति पञ्चधा भेदं स्मरन्ति उतेत्यप्यर्थे तथा ये कर्मठाः विपणं कर्मफलं व्यवहारम् ऋतं सत्यं स्मरन्ति। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति। तदपि ते सर्वे आरुपितैरारोपणैः भावे क्तः। भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या। यद्वा।ते आरुपितैः लौकिकारोपैरेव स्मरन्ति न तेषां तत्र मुख्यं तात्पर्यम्। "ब्रह्मैव सन् ब्रह्माप्येति, सदेव सोम्येदमग्र आसीत्, अनीशया शोचति मुह्यमानः अनीशया मायया, एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन, यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतिविरोधात्। त्रिगुणमयः पुमानिति हेतुना या भिदा आत्मभेदव्यवहृतिः पञ्चधोक्ता सा यद्यस्मात् त्वयि विषये अबोधकृता त्वद्विषयाज्ञानकल्पिता भवति अतः ततः अबोधात् परत्र असङ्गे अज्ञानविषयत्वाश्रयत्वयोरयोग्ये आवरणरहिते अवबोधरसे ज्ञानैकस्वरूपे त्वयि सः अबोधः न भवेत् नास्त्येव। "आदित्यवर्णं तमसः परस्तात्, स यथा सैन्धवघनोनन्तरो बाह्यः कृत्स्नो रसघन एव स्यादेवं वा, अरेयमात्मानन्तरो बाह्यः, नैषा तर्केण मतिरापनेया" इत्यादिश्रुतेः॥ २५॥ ननु यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपञ्चजातं पुरुषो भोक्ता च पृथक् नास्तीत्युक्तं स्यात् ततः कथं तयोः सत्त्वेन

प्रतीतिरत आहुः–सदिवेति ॥ मनः मनोमात्रविलसितमिदमशेषं त्रिवृत् आमनुजात् असदपि त्वयि अधिष्ठाने सति सदिव विभाति । आत्मविदस्तु आत्मतया सदाभिमृशन्ति । हि यतः कनकार्थिनः तदात्मतया कनकस्य विकृतिन्न त्यजन्ति अतः स्वकृतमिदं विश्वमनुप्रविष्टं पुरुषरूपं च आत्मतयैवावसितमित्यन्वयः । मनः मनोमात्रविलसितमिदं दृश्यमानमशेषं त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातमिदंकारास्पदम् आमनुजात् मनुजं जीवमहङ्कारास्पदमभिव्याप्य असत् तुच्छमपि त्वयि अधिष्ठाने सति सदिव विभाति अधिष्ठानसत्तया सद्वत्प्रतीयते । इदंकारास्पदस्य जगतः अहङ्कारास्पदस्य जीवस्यापि च पृथक् प्रतीतिर्मनोमात्रविलसितेत्याशयः । तथा च श्रुतिः ।" असतोऽधि मनोऽसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत, तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंच " इति । ननु आत्मविदामपि विश्वं सदेव स्फुरति ततः कथमसदिति चेत्तत्राह । आत्मविदस्तु अशेषमिदं विश्वं भोक्तृभोग्यात्मकम् आत्मतया आत्मस्वरूपत्वेन सदाभिमृशन्ति सदिति जानन्ति आत्मकार्यत्वान्न ततः पृथगित्यर्थः । यथा स्वर्णक्रयिकाः जनाः तदात्मतया कनकरूपत्वेन हेतुना कनकस्य विकृतिं कटककुण्डलादि न हि त्यजन्ति किंतु कनकरूपत्वेनैव स्वीकुर्वन्ति तथा स्वेनोपादानभूतेन कृतं तदनुप्रविष्टं पुरुषरूपञ्च सर्वमिदं भोग्यभोक्तात्मकमात्मतयैवावसितं निश्चितमात्मविद्भिः ॥ २६ ॥ ननु " सत्यं ज्ञानमनन्तं ब्रह्म " इत्यादिभिरेवंभूतं भगवन्तं श्रुतयः प्रतिपादयन्ति तज्ज्ञानं सुकरमेवेति किं

तव परि च ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाऽऽक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥
परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ २७ ॥

भक्त्येत्यत आह–तवेति॥ये अखिलसत्वनिकेततया तव त्वां परिचरन्ति ते एव अविगणय्य निर्ऋतेः शिरः पदा आक्रमन्ति यतः त्वं तान् प्रसिद्धान् विबुधानपि गिरा पशूनिव परिवयसे अतः तेषु ये त्वयि कृतसौहृदा भवन्ति ते खलु पुनन्ति ये तु त्वत्तो विमुखाः ते तु न पुनन्ति इत्यन्वयः । तवेति कर्मणि शेषे षष्ठी । " छन्दसि व्यवहिताश्च " इति सूत्रात् परीत्यस्य यच्छब्दव्यवधानं न दोषः उतशब्द एवकारार्थे । ये अखिलसत्वनिकेततया अखिलानि सत्वानि प्राणिनो निकेतः निवासस्थानं यस्य स तथा तस्य भावस्तत्ता तद्रूपेण सर्वत्र त्वद्दृष्ट्या तव त्वां परिचरन्ति सेवन्ते ते एव अविगणय्य तिरस्कृत्य निर्ऋतेर्मृत्योः शिरः मूर्धानं पदा पादेन आक्रमन्ति मृत्योर्मूर्ध्नि पदं दधते मृत्युं तरन्ति विमुच्यन्ते इत्यर्थः । ह्रस्वाभाव आर्षः । तेषां कृतार्थत्वेकः संदेहः तान् प्रसिद्धान् विबुधान् आपाततो वेदार्थज्ञान् पण्डितानपि त्वं गिरा वेदरूपया वाचा पशूनिव परिवयसे तत्तत्कर्माधिकारित्वेन बध्नासि । तथा च श्रुतिः । " तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम् ' इति । अतः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितम् आत्मानमन्यानपि च पुनन्ति पवित्रयन्ति विमुक्तियोग्यान् कुर्वन्ति ये तु त्वद्विमुखास्तेनेति आत्मानमपि न पुनन्ति अन्यांस्तु कुतः

न्मलिनचित्तेषु परोक्षमेव भवति इति नापरोक्षसंसारभ्रमनिवृत्तिक्षमं भवति । भगवत्परिचर्यया शुद्धे चित्ते तु अपरोक्षमेव भवतीति करतलकलितो मोक्ष इति श्रुतिश्च । "यमेवैष वृणुते तेन लभ्यः, यस्य देवे परा भक्तिः" इत्यादि ॥ २७ ॥ त्वमिति ॥ त्वम् अकरणः अपि अखिलकारकशक्तिधरः स्वराट् च असि अजया युक्ता विश्वसृजः अनिमिषाश्च अखिलक्षितिपतेर्वर्षभुज इव तव बलिमुद्वहन्ति स्वयं च समदन्ति । यत्र तु येऽधिकृतास्ते भवतश्चकिताः सन्तः तत्तत्कार्यं विदधति इत्यन्वयः । त्वम् अकरणः चक्षुरादिरहितोऽपि स्वराट् स्वेन राजते तथाभूतः स्वतन्त्रः करणाद्यनपेक्षश्च अतः अखिलानां प्राणिनां यानि कारकाणि इन्द्रियाणि कर्मधारयो वा तेषां शक्तीर्धारयति प्रवर्तयतीति तथाभूतश्चासि । "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।" इति श्रुतेः । किं बहुना अजया अविद्यया युक्तास्तया वृताः विश्वसृजो ब्रह्मादयः अनिमिषाः लोकपाला देवा इन्द्रादयश्च करणाधिष्ठातारोऽपि तव बलिमुद्वहन्ति पूजां कुर्वन्ति । यथा सस्त्रीका एव किङ्कराः स्वामिनं सेवन्ते तथा अविद्यायुक्ता देवास्त्वामिति लोकोक्तिः । तथा प्रजाभिर्दत्तं हव्यादिलक्षणं बलिं स्वयमपि समदन्ति भक्षयन्तीत्यर्थः । यथा वर्षभुजः खण्डमण्डलपतयः स्वप्रजादत्तं बलिं भुञ्जाना अपि अखिलक्षितिपतेर्महामण्डलेश्वरस्य बलिमुद्वहन्ति तद्वत् । तथा ये तु यत्र कार्ये अधिकृता नियुक्तास्ते भवतश्चकिता भीताः सन्तस्तत्कार्यं विदधति कुर्वन्तीति त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः । "भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥" इति श्रुतेः ॥ २८ ॥ स्थिरेति ॥ हे विमुक्त यदि

त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥२८॥ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि

परस्य विमुक्ततत ॥ नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवाऽपदस्य तव शून्यतुलां दधतः ॥ २९ ॥

ततः अजातः परस्य तव अजया विहरः भवति तदा उदीक्षया उत्थनिमित्तयुजः स्थिरचरजातयः स्युः वियत इवापदस्य शून्यतुलां दधतः परमस्य तव कश्चिदपि अपरः न भवेत् परश्च न भवेत् इत्यन्वयः । हे विमुक्त यदि सृष्टिसमये ततः अजातः परस्य दूरे वर्तमानस्यासङ्गस्य तत्प्रेरकस्य तव अजया मायया विहरः विहारेच्छा भवति तदा उदीक्षया तवेक्षणमात्रेण उत्थानि उत्थितानि आविर्भूतानि निमित्तानि विचित्रकर्मयुक्तानि लिङ्गशरीराणि तैर्युज्यन्ते ते स्थिरचरजातयः स्थावरजङ्गमशरीरविशिष्टाः प्राणिनः स्युः जायन्ते इत्यर्थः । "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे देवाः सर्वे लोकाः सर्वाणि भूतानि सर्व आत्मानो व्युच्चरन्ति" इति श्रुतेः । कर्मणां वैचित्र्यमेव सृष्टिवैचित्र्ये हेतुस्तव तु वैषम्यं नास्तीत्याहुः । न हीति । वियत आकाशस्येवापदस्य वाङ्मनसयोरगोचरस्य व्याप्यगतदोषासंश्लिष्टस्य वा शून्यतुलां शून्यसाम्यं दधतः अतिसूक्ष्मस्य ननु शून्यस्यैवेति परमस्य उत्तमस्य परमकारुणिकस्य तव कश्चिदपरः स्वीयः न भवेत् परोऽस्वीयश्च न भवेत् नास्ति । येन

विषमा सृष्टिः स्यादिति शेषः ॥ २९ ॥ अविद्याकृतकार्योपाधीनामीश्वरस्यांशानां जीवानामुत्पत्तिर्निरूपिता तत्र यद्येकाविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसङ्गः । यदि नानाविद्यास्तर्हि तस्यैवांशान्तरेण संसारानपगमादनिर्मोक्षप्रसङ्ग इत्यादियुक्त्या वस्तुत एव नानात्मानः तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात् । देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् । तथात्वे च परलोकसाधनानां वैयर्थ्यं स्यात् कृतनाशाकृताभ्यागमापत्तिश्चेति अतः सर्वगता नित्याश्चेति केचन नैयायिकादयो मन्यन्ते तन्मतं दूषयन्ति—अपरिमिता इति ॥ हे ध्रुव यदि तनुभृतः अपरिमिताः ध्रुवाः सर्वगताश्च स्युस्तर्हि तेषां शास्यता इति नियमो न स्यात् । इतरथा तु अयं दोषो न स्यात् अतः यन्मयं जीवाख्यमजनि तद्वस्तु कारणं कारणतया स्वकार्यमविमुच्य स्वकार्यस्य जीवस्य नियन्तृ भवेत् । यत् कारणाख्यं वस्तु समं तन्मतस्य दुष्टतया हेतुना अनुजानताममतमेवेत्यन्वयः । हे ध्रुव यदि तनुभृतो जीवाः अपरिमिता वस्तुत एवासङ्ख्याताः ध्रुवास्तेनैव रूपेण नित्याः सर्वगता व्यापकाश्च स्युस्तर्हि तेषां शास्यता नियम्यता इति नियमो न स्यात् । इतरथा तेषां त्वज्जन्यत्वे अव्यापकत्वे चायं त्वच्छास्यताभावरूपो दोषो न स्यात् । यद्वा । तेषामपि त्वत्समत्वात्त्वया तेषां शास्यता नियम्यता न स्यात् । श्रूयते च । "अन्तः प्रविष्टः शास्ता जनानाम्" इति शास्यता । तथा जीवानां नित्यत्वव्यापकत्वाङ्गीकारे नियमः

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ॥
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥

पुण्यपापादिसाधननियमो दुःखसुखादिफलनियमश्च न स्यात् । व्यापकत्वेन सर्वसंबन्धस्य सर्वत्र विद्यमानत्वात् । इतरथा जीवानां जन्यत्वे अणुत्वे तूभयमपि घटत एवेति शेषः । यन्मयं यस्य ब्रह्मणो विकारप्रायं जीवाख्यमजनि जातं तत्कारणं वस्तु कर्तृकारणतया स्वकार्यमविमुच्य उपादानत्वेनापरित्यज्य तस्य स्वकार्यस्य जीवाख्यस्य नियन्तृ नियामकं भवेत् । किं तत्कारणं वस्त्वित्यपेक्षायामाहुः । यत् कारणं वस्तु समं सर्वानुस्यूतं तत् मतस्य सामान्येन बुद्धिविषयमात्रस्य दुष्टतया हेतुना अनुजानतां वयं जानीम एव ब्रह्मेति वदतामपि वस्तुतः अमतम् अविज्ञातप्रायमेव दुर्ज्ञेयत्वात् । तथा च श्रुतिः । "यस्या मतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" ॥ इति । न च जीवस्याणुत्वे सर्वदेहव्यापि चैतन्यं न स्यादिति शङ्कनीयं तत्प्रभया व्याप्तत्वेन सर्वदेहचैतन्योपपत्तेः । यथोक्तं गीतासु । "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥" अद्वैतवेदान्तिमते चायं भावः । अविद्याप्रतिबिम्बो जीवः स चाविद्योपाधिभेदेन भिन्नः प्रतिबिम्बस्य च बिम्बरूपेणैव नित्यत्वादि न तु स्वरूपेण । एवं च बिम्बस्य तव नियन्तृत्वेन जनकत्वे च सिद्धे सिद्धं पूर्वोक्तं भजनीयत्वमिति श्रुत्या च जीवस्य प्रत्यगभिन्नब्रह्मसाक्षात्कारवतः परमेश्वरभावापत्तिरूपा मुक्तिः प्रतिपाद्यते तेन बिम्बचैतन्यरूपत्वं परमेश्वरस्य व्यवस्थाप्यते । प्रतिबिम्बरूपत्वे तु मुक्तजीवसायुज्यास्पदत्वासंभवात् । न हि प्रति-

बिम्बं स्वोपाधिलये प्रतिबिम्बान्तरे लीयते किंतु बिम्ब एव । तदाहुः कल्पतरुकाराः । " न मायाप्रतिबिम्बस्य निर्मुक्तैरुपसृप्यता । " इति ॥ ३० ॥ ननु परमात्मनो जीवा जायन्त इत्यङ्गीकारे जीवानामनित्यत्वप्रसङ्गात्पूर्वोक्तदोषप्रसङ्गः । किञ्च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् न चैतद्युक्तं स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमात् इत्याशङ्क्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः । तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात् पुरुषस्य वा उभयोर्वा । आद्ये जीवानां जडत्वापत्तिः । द्वितीये पुरुषस्य विकारित्वप्रसङ्गः इत्याशयेनाह—न घटत इति ॥ अजयोः प्रकृतिपूरुषयोः उद्भवः न घटते । उभययुजा असुभृतः जलबुद्बुदवत् भवन्ति ततः ते इमे जीवाः विविधनामगुणैः सह सरितः अर्णवे इव अशेषरसा मधुनि इव परमे त्वयि लिल्युः इत्यन्वयः । अजयोः श्रुत्याजत्वेन प्रोक्तयोः प्रकृतिपूरुषयोरुद्भवः न घटते उभयं च तद्युक् च परस्पराध्यस्तमिति यावत् । तेन असुभृतः प्राणाद्युपाधयो जीवा जलबुद्बुदवत् भवन्ति जायन्त इत्यर्थः । यथा केवलेनानिलेन केवलेन जलेन वा जलबुद्बुदा न भवन्ति किंतु मिलिताभ्यां तद्वदित्यर्थः। तत्र च यथानिलो निमित्तं जलमुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुषं उपादानम् यथा। "अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवात्मनः सर्वे प्राणादयो व्युच्चरन्ति " इत्यादौ चेतनप्रपञ्चस्य परमात्मोपादानत्वश्रवणात् न च विकारित्वं परिणामानङ्गीकारात् । केचित्पुनः परिणाममङ्गीकृत्य

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ॥
त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ ३१ ॥

आत्मनो विकारभिया विपरीतं निमित्तोपादानभावमङ्गीकुर्वन्ति सर्वथा तावत् प्रकृतिपुरुषैक्यादुद्भवतीति सिद्धम् ।तत् "एकमेवाद्वितीयं ब्रह्म,अजामेकाम्, अविनाशी वा अरेऽयमात्मा " इत्यादिश्रुतिबलात् उत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म न स्वत इत्युक्तम् । उपाधिलयेन परमात्मनि लयश्रवणादपि न वास्तवं जन्मेत्याह । त्वयीति । यतो न वास्तवं जन्म ततो हेतोः त इमे जीवाः विविधनामगुणैः अनेकप्रकारेन्द्रियान्तःकरणाद्युपाधिभिः सह त्वयि परमेश्वरे परमकारणे लिल्युर्लीना बभूवुः । तत्र दृष्टान्तद्वयमाहुः । तत्र मुक्तौ सर्वोपाधेर्लयात् अर्णवे सरित इव लीयन्ते । तथा च श्रुतिः । " यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् " इति । सुषुप्तिप्रलययोस्तु मधुन्यशेषरसा इव लीयन्ते । यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते एवं स्वापादौ विशेषमात्रलयात् कारणस्य विद्यमानत्वात्सामान्यतो वर्तन्त एव । तथा च श्रुतिः । " यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां गमयन्ति ते यथा न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे " । इति अन्ये पुनराहुः । ननु स्वदेहेन्द्रियादिनियन्तुर्जीवात्मनोऽन्यत उत्पन्नत्वेन नियम्यत्वं चेत्परमात्मनोऽप्यात्मत्वनियन्तृत्वाविशेषादन्यत उत्पन्नत्वमस्तु इत्याशङ्क्य प्रकृतिपूरुषयोरेवोत्प-

तिर्न संभवति किं पुनः परमात्मन इति द्योतयन्त्यः अजनि च यन्मयमिति समनन्तरोक्तयत्पदार्थं स्फुटयन्त्य आहुः। न घटत इति। प्रकृतेस्त्रिगुणात्मकमूलशक्तेः पुरुषस्य महत्स्रष्टुश्च उद्भवो न घटतेऽनादित्वात्। किं पुनस्तदुभयाधिष्ठानस्य तवेति असुभृतो जीवास्तु उभयं प्रकृतिपुरुषात्मकं विश्वं युनक्ति व्याप्नोति तेन मूलाधिष्ठानेन बिम्बभूतेन हेतुना भवन्ति जायन्ते बुद्बुदा यथा जलेनैव जायन्ते वाय्वादिस्तु निमित्तमात्रमिति। एवं जीवास्त्वदुपादानका अविद्याद्युपाधयस्तु निमित्तमात्रमिति त्वन्मयमेव जीववृन्दमजनीति प्राणादिलिङ्गदेहाद्युपाधिजन्मनैव जीवानां जन्म न स्वत इति बोधितं शेषं प्राग्वत्। केचिद्भागवतास्तु अपरिमिता ध्रुवा इति न घटत इति च द्वयमपि पूर्वपक्षतया व्याख्याय नृषु तवेत्यग्रिमश्लोकं सिद्धान्तत्वेन व्याचख्युः ॥ ३१ ॥ नृषु तवेति ॥ अमीषु नृषु तव मायया भृशं भ्रममवगत्य सुधियः अभवे त्वयि अनुप्रभवं भावं दधति। यत् यतः अभवच्छरणेषु तव भ्रुकुटिस्त्रिणेमिः भयं मुहुः सृजति अतः अनुवर्ततां भवभयं कथं स्यादित्यन्वयः। अमीषु नृषु जीवेषु तव मायया भृशं दुस्तरं भ्रमं देहाद्यात्माभिमानलक्षणमवगत्य ज्ञात्वा सुधियो विवेकिनः अभवे भवनिवर्तके त्वयि अनुप्रभवमनुक्षणं वर्द्धमानं भावं श्रवणकीर्तनाभ्यां मनोवृत्तिं विदधति कथमिति यत् यस्मात् अभवच्छरणेषु न भवान् शरणं रक्षको येषां तेष्वेव तव भ्रुकुटिः भ्रूभङ्गरूपः त्रिणेमिस्तिस्रो नेमय इवावच्छेदकाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य स कालः भयं

**नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियो भवे दधति भावमनुप्रभवम् ॥ कथमनुवर्ततां भवभयं तव यद्**
**भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३२ ॥ विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यंतु**
**लोलमुपायखिदः ॥ व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाऽऽजसन्त्यऽकृतकर्णधरा जलधौ ॥ ३३ ॥**

जन्ममरणादिलक्षणं मुहुः सृजति करोति। अतोऽनुवर्त्ततामनुवर्तमानानां शतार्षः। त्वामेव शरणं भजतां भवभयं संसारभयं कथं स्यात् न कथंचिदपीत्यर्थः। तथा च श्रुतयः। "परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च। उपस्थाय प्रथमजामृतस्यात्मनाऽऽत्मानमभिसंविवेश ॥" इत्यादयः ॥ ३२ ॥ स च भगवति भावो मनोनियमेन भवेत् तच्च गुरूपसदनादिति गुरूपसदनमाहुः—विजितेति ॥ हे अज गुरोश्चरणं समवहाय ये अतिलोलं विजितहृषीकवायुभिः अदान्तमनस्तुरगं यन्तुं यतन्ति ते उपायखिदः व्यसनशतान्विताश्च सन्तः इह अकृतकर्णधरा जलधौ वणिज इव सन्ति इत्यन्वयः। हे अज गुरोश्चरणं समवहाय अनाश्रित्य ये जना अतिलोलं चञ्चलं विजितानि हृषीकाणीन्द्रियाणि वायुः प्राणाश्च यैस्तैर्योगिभिरपि अदान्तमदमितं वशीकर्त्तुमशक्यं मन एव तुरगः दुर्दमत्वसाम्यात्तं यन्तुं वशीकर्त्तुं यतन्ति प्रयतन्ते। तङ्भाव आर्षः। ते उपायेषु खिद्यन्ते क्लिश्यन्तीत्युपायखिदः तथा व्यसनशतान्विता बहुदुःखाश्च सन्तः इह संसारसमुद्रे सन्ति तिष्ठन्ति संसारदुःखे निमग्ना भवन्तीत्यर्थः। तत्र दृष्टान्तमाहुः। अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा जलधौ निमग्ना भवन्ति तथेति। गुरूपदर्शितभगवद्भजनसुखानुभूतौ तु मनः स्वयमेव निश्चलं भवति नान्यथा।

तथा च श्रुतिः । " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्, आचार्यवान् पुरुषो वेद " इत्यादि ॥ ३३ ॥ वैराग्यमात्मज्ञानभक्त्योरङ्गं श्रुतयो विदधति—स्वजनेति ॥ नृणां मध्ये त्वां श्रयतः पुंसः सर्वरसे आत्मनि त्वयि सति स्वजनसुतात्मदारधनधामधरासुरथैः किं फलम् इति सत् अजानतां मिथुनतः रतये चरतां स्वविहते स्वनिरस्तभगे इह संसारे को नु सुखयति न कोपीत्यन्वयः । नृणां मध्ये त्वां श्रयतः पुंसः सर्वे रसाः सुखानि यत्र तादृशे आत्मनि त्वयि स्फुरति सति स्वजनादिभिः किं फलं न किमपि । आत्मा देहः धाम गृहं धरा भूमिः असवः प्राणा इन्द्रियाणि च रथा इत्युपलक्षणमन्येषामपि सुखसामग्रीतया प्रसिद्धानाम् इत्येवं सत् परमार्थसत्यं सुखरूपं त्वामजानताम् अजानतः अत एव मिथुनतः स्त्रियं मिथुनीकृत्य ल्यप्लोपे पञ्चमी । रतये रतिसुखाय चरतां चरतः गृहेषु वर्तमानान् कर्मणि षष्ठ्यौ । स्वविहते स्वत एव नाशशीले स्वत एव निरस्तं भगमैश्वर्यादि यस्य तस्मिन्निह संसारे प्रथमान्तपाठे कर्तुर्विशेषणं को नु स्वजनसुतादिरर्थः सुखयति न कोऽपीति । तथा च श्रुतिः । " परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन " इत्यादि ॥ ३४ ॥ भुवीति ॥ ये ऋषयः विमदाः भवत्पदाम्बुजहृदश्च ते अघभिदङ्घ्रिजला उत तादृशा अपि भुवि पुरुपुण्यतीर्थ-

स्वजनसुतात्मदारधनधामधराऽसुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ॥ इति सदजानतां मिथुनतो रतये चरतां सुखयति को न्विह स्वविहते स्वनिरस्तभगे ॥ ३४ ॥ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ॥ दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ ३५ ॥ सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ॥ व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥

सदनान्युपासते । यतः ये नित्यसुखे त्वयि सकृदपि मनः दधति ते पुनः पुरुषसारहरावसथान् न उपासते इत्यन्वयः । ये ऋषयः विमदाः निरहङ्काराः भवतः पदाम्बुजं हृदि येषां ते च अघानि भिनत्ति इत्यघभित् तादृगङ्घ्रिजलं येषां त उत तादृशा अपि भुवि यानि पुरूणि बहूनि पुण्यानि तीर्थानि तथा सदनानि क्षेत्राणि च उपासते प्रायस्तत्रैव महत्सङ्गात् ये नित्यसुखरूपे आत्मभूते त्वयि सकृदपि मनो दधति ते पुनः पुरुषाणां सारं विवेकधैर्यक्षमाशान्तिप्रमुखं हरन्ति निराकुर्वन्तीति तथा ये आवसथा गृहास्तान्नोपासते ॥ ३५ ॥ सत इति ॥ इदं जगत् यतो हेतोः सतः उत्थितम् अतः सत् इति चेत् ननु इदमनुमानं तर्कहतं यतः क्वचित्पितृपुत्रादौ व्यभिचरति क्व च रज्जुसर्पादौ मृषा भवति अत्रापि तथा नास्ति किंतु उभययुक् अतो न सत् । व्यवहृतये तु विकल्प इषितः स तु अन्धपरम्परयापि भवति । ते भारती उरुवृत्तिभिः उक्थजडान् भ्रमयति इत्यन्वयः । इदं जगत् सतः सद्रूपात्परमात्मनः उत्थितमुत्पन्नमतः सत् सत्यमेवेति । तथा च इदं जगत् इति पक्षः सत् इति साध्यम् । सत उत्पन्नत्वात् इति हेतुः यद्यत् उत्पन्नं तत्तदात्मकमेव दृष्टं यथा कनकादुत्पन्नं कटककुण्डलादि तदात्मकं भवति तथेदमपि सत उत्पन्नत्वात्सदिति चेत् । ननु इदमनुमानं तर्केण विचारेण हतं बाधितं प्रती-

यते । तर्कहतत्वमाह व्यभिचरतीति । क्वचित् पितृपुत्रादौ मुद्गरघटप्रध्वंसादौ च कार्यस्य कारणात्मकत्वं व्यभिचरति । ननु तदुत्पन्नत्वं तदुपादानकत्वं विवक्षितमिति चेत् सदुत्पन्नमपि क्व च क्वचित् मृषा मिथ्या भवति । यथा गुणोपादानकस्यापि फणिनो न गुणत्वं न च सत्वं किंतु मिथ्यात्वमेव । अन्यथा बाधाभावप्रसङ्गात् । अतः पुनरपि व्यभिचरत्येव । ननु तत्र न गुणमात्रं फणिन उपादानं किंतु अविद्यायुक्तमतोऽत्र युक्तं फणिनो मिथ्यात्वमिति चेत् न तथेति । अत्रापि कारणवत् नथा सदेव नास्ति किं तु उभाभ्यां कारणनिष्ठसत्वस्वनिष्ठासत्वाभ्यां युज्यत इत्युभययुक् अयमाशयः । अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम् । एवंभूतस्य च न वस्तुसत्वं यद्वा अत्र द्वौ पूर्वपक्षौ इदं सत् सदुत्थत्वात् इति कारणसत्वमाश्रित्य कार्यस्य सत्त्वं साध्यते किंवा प्रपञ्चस्य बाधादर्शनजन्यं सत्वं हेतुमाश्रित्य प्रधानादेः सत्वं साध्यते । यथा इदं सत उत्थितं सत्त्वादिति तद्द्वयं तन्त्रेण निरस्यति । ननु तर्कहतं तथा हि सदुत्थत्वं सद्विवर्तत्वं सत्परिणामत्वं वा । आद्ये इष्टापत्तिः । अन्त्ये परिणामिनः क्षीरादिवत् अनित्यत्वात्कारणत्वासिद्धिरित्याह व्यभिचरतीति । ननु दध्यादावपि प्रधानगतं सुखदुःखमोहात्मकत्वमस्त्येवातो नित्यत्वं कनकवदिति चेत्क च मृषेति सुखाद्यात्मकस्यापिस्वप्नाङ्गनादेः मृषात्वात्तत्कारणस्यापि मृषात्वं दुर्वारम् । अस्तु तर्हि कार्यस्य सदसदात्मकत्वमत आह न तथोभययुगिति । स्वप्नाङ्गना हि न घटादिवदबाध्यानाप्यत्यन्तासती शशशृङ्गवत् चरमधातुविसर्गान्तकार्यकारित्वात् अतो निर्वाच्या अतोऽस्याः कारणं निद्राप्रधानं वा अनिर्वाच्यमेव हेतुकार्ययोः साजात्यनियमात् । एवं द्वितीयानुमाने । तथा हि कार्यस्य सत्वात्कारणमपि सदिति चेन्नतु तर्कहतं सत्यस्यापि भयकम्पादेर्हेतौ रज्जुसर्पे मृषात्वदर्शनात् अतः व्यभिचरति क्व चेति । तस्मान्न रज्जुसर्पः सत्यः शशशृङ्गवदत्यन्तासदपि नेत्याह क्व च मृषा नेति । असत्वपक्षेऽलीकमपि नेत्यर्थः । शशशृङ्गरज्जुसर्पयोः निःस्वरूपत्वे समानेऽपि अन्त्यो दृश्यत्वात् भयादिकार्यजनकत्वाच्च नात्यन्तमसत् । शशशृङ्गं तु तद्विपरीतत्वादत्यन्तमसत् इत्यर्थः । अस्तूभयात्मकमिति चेन्न तथोभययुक् इति । यथा मृषा न तथा सदसदात्मकमपि नेत्यर्थः विरोधादतोऽनिर्वाच्यमेव । ननु सदिदम् अर्थक्रियाकारित्वात् यन्नैवं तन्नैवं यथा शुक्तिरजतम् इति रीत्या प्रपञ्चस्य सत्यत्वं साधयाम इति चेत् व्यवहर्तये अर्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव कूटकार्षापणादिनापि व्यवहारदर्शनात् । नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धः अत्यन्तासत्वे तु कथं प्रपञ्चो भ्रमः स्यात् इति चेत् यतः स भ्रमः अन्धपरम्परयापि भवत्यतो न दोषः अयं भावः । संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते नतु वस्तुसत्ताम् । अतोऽनादित्वात् पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यति अन्धपरम्परान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति । ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, अपामसोमममृता अभूम" इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते । न हि नित्यं वस्तु असद्भवति तस्माद्वेदप्रतिपादितत्वात् । द्वैतं सदेवेत्याशङ्क्याह भ्रमयतीति । हे भगवन् ते भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणीलक्षणादिवृत्तिभिरुक्थजडान् कर्मश्रद्धाभराक्रान्तमन्दमतीन् भ्रमयति मोहयति अयं भावः । न हि वेदः कर्मफलं नित्यमभिप्रैति किन्तु लक्षणया प्राशस्त्यमात्रं विध्येकवाक्यत्वात् । अन्यथा वाक्यभे-

द्प्रसङ्गात् " तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च । अतः कर्मजडानामिदं भ्रममात्रमिति एतेनैव " तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इत्यादीनामप्यन्यपरत्वं दर्शितं भवति । कार्यं नासत् किन्त्वनित्यमिति वादिनस्तु इदं सत उत्थितं सदेव नतु स्वतः सत् । यथा कारणगतमेव सत्वं सन् घट इत्यत्र घटनिष्ठतया भासते तद्वत् ननु तत्र कार्यकारणयोरभेदापत्तिरिति चेन्नेत्याहुः । ननु तर्कहतमिति चिज्जडयोरभेदस्य प्रमाणबाधितत्वात् यदि भेदप्रतिषेधद्वारा अभेदः साध्यते तत्र व्यभिचरति क्व चेति । पितृपुत्रादौ भेदस्यैव दर्शनात् नच अधिष्ठानरूपपरमेश्वरसत्तातिरिक्ता प्रपञ्चस्य सत्ता नास्तीति चेत्तत्राहुः नेति । यथा शुक्तिरूप्यादि मृषा तथा इदं विश्वं मृषा न भवति किन्तु सत्यम् उभययुक् कारणकार्ययोरुभयोर्युज्यते इत्युभययुक् श्रुत्युक्तं सत्वम् उभयत्रास्तीत्यर्थः । किन्तु कारणस्य सत्वं सार्वकालिकं कार्यस्याल्पकालिकं कार्यस्य सत्वं विना व्यवहारोऽपि न सिद्धयतीत्याह व्यवहृतये इति । व्यवहारसिद्धयर्थं विकल्पः कार्यम् इषित इष्ट एव सत्येनैव घटादिना जलहरणादिसिद्धेः । कूटकार्षापणादिना व्यवहारस्तु अन्धपरम्परया भवति नतु विज्ञपरम्परया तस्माज्जगत् सत्यमेव किंतु अनित्यत्वान्नश्वरम् । यत्तु कर्मठाः कर्मफलस्य नित्यत्वमाहुस्तत्तु न युक्तमित्याहुः भ्रमयतीति ॥ ३६ ॥ न यदिदमिति ॥ यत् यतः इदं विश्वम् अग्रे न आस तथा निधनादनु न भविष्यत् अतः

न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे ॥
अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ ३७ ॥

अन्तरापि एकरसे त्वयि मृषा एव विभातीति मितम् अतः श्रुत्या द्रविणजातिविकल्पपथैः उपमीयते तस्मात् वितथमनोविलासमिमं ये ऋतमित्यवयन्ति ते अबुधा इत्यन्वयः । "यद्यस्मादिदं विश्वमग्रे सृष्टेः पूर्वं न आस न आसीत्, सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेकमेवाग्र आसीत् " इत्यादिश्रुतेः । नच निधनात्प्रलयादनु अनन्तरं भविष्यद् भविष्यति इलोप आर्षः । शत्रन्तं वा । " नासदासीन्नो सदासीत्तदानीम् " इत्यादिश्रुतेः । अतः कारणात् अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मितं निश्चितम् । यद्वा । अन्तरापि विभातीति अनुमितं तर्कितमित्यन्वयः । यत एवमतः श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पा भेदा घटकुण्डलादयः तेषां पन्थानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते । यथा तत्र कार्याकाराणां नामधेयमात्रता कारणं मृदाद्येव तु सत्यं तथाऽत्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यं तथा च श्रुतिः । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम् " इत्यादि । तस्मादस्य सत्वे प्रमाणाभावादसत्वे प्रमाणस्य विद्यमानत्वात् वितथमनोविलासमिदमृतं सत्यमिति ये अवयन्ति जानन्ति ते अबुधा अज्ञा इत्यर्थः । अत्रैवं प्रयोगः । विवादाध्यासितं न सत् आद्यन्तयोरविद्यमानत्वात् ।

विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् इत्यन्वये दृष्टान्तः। आत्मवच्चेति व्यतिरेके दृष्टान्तः। कार्यसत्यत्ववादिनस्तु यदिदमग्रे न आस अनु च न भविष्यत् किन्तु अन्तरा मध्य एव मृषति एवं सृजामीत्यादिसंकल्पं करोति स मृषः। स चासावेकरसश्च तस्मिंस्त्वयि मितं निश्चितं सत्यं विभाति। किं च इदं सत्यमपि नित्यं नास्ति अतो द्रविणजातिविकल्पपथैः घटकुण्डलादिप्रकारैः सत्यत्वेनैव उपमीयते ननु रज्जुसर्पादिप्रकारैर्मिथ्यात्वेन। अतः ऋतं सत्यमिदं विश्वं ये वितथमनोविलासं वदन्ति ते अबुधा इति व्याचख्युः ॥ ३७ ॥ ननु यदि प्रपञ्चो नास्त्येव तदा असता तेन संबन्धस्याप्यभावात्कुतो जीवः संसरति कुतो वा ईश्वरो नित्यमुक्तः किंविषयं च तदा कर्मकाण्डमित्या शङ्क्याहुः—स इति ॥ स जीवः यत् यतः अजया अजाम् अनुशयीत ततः गुणांश्च जुषन् तदनुसरूपतां जुषन् अपेतभगः सन्मृत्युं भजति त्वमुत त्वन्तु आत्तभगः अपरिमेयभगश्च अतस्तामजाम् अहिस्त्वचमिव जहासि तथा अष्टगुणिते महसि महीयसे इत्यन्वयः। स जीवो यत् यस्मात् अजया मायया अजामविद्यामनुशयीत आलिङ्गेत् उपाधिलिप्तो भवेदित्यर्थः। ततो गुणांश्च देहेन्द्रियादिकान् जुषन्सेवमानः आत्मतया अध्यस्यन् तदनु अनन्तरं सरूपतां तद्धर्मयोगं जुषन् अपेतभगः तिरोहितज्ञानैश्वर्यानन्दादिगुणः सन्मृत्युं संसारं भजति प्राप्नोति त्वमुत त्वं तु आत्तभगः नित्यसिद्धज्ञानैश्वर्यादिः अपरिमेयभगः अनन्तैश्वर्यादियुक्तश्च न ह्यन्येषामिव परिच्छिन्नं तवैश्वर्यम् अतः ताम्

स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः ॥ त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥ यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ॥ असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥

अजां जहासि। ननु सा मय्येवास्ति कथं तस्यास्त्यागस्तत्राह। यथा अहिर्भुजङ्गः स्वगतमपि कञ्चुकं जहाति गुणबुद्ध्या नाभिमन्यते तथा त्वमजामुपेक्षसे नहि निरन्तराह्लादिसंवित्कामधेनुवृन्दपतेरजया कृत्यमिति तथा अष्टगुणिते अणिमाद्यष्टविभूतिमति महसि परमानन्दस्वरूपे महीयसे पूज्यसे विराजसे अनेन जीवेश्वरयोर्वैलक्षण्यमुक्तम्। "द्वा सुपर्णा सयुजा सखाया, अजामेकां लोहितशुक्लकृष्णाम्" इत्यादयः श्रुतयश्च ॥ ३८ ॥ यदीति ॥ हे भगवन् यतयो यदि हृदि स्थिताः कामजटाः न समुद्धरन्ति तदा तेषामसतां हृदि गतोऽपि त्वम् अस्मृतकण्ठमणिरिव दुरधिगमोऽसि। हे भगवन् असुतृपयोगिनाम् अनपगतान्तकात् अनधिरूढपदाद्भवतश्च इत्युभयतः अपि असुखमित्यन्वयः। हे भगवन् यतयो मनइन्द्रियादिप्रणिधानशीला अपि यदि हृदि स्थिताः कामानां जटाः वासना न समुद्धरन्ति नोत्पाटयन्ति न परित्यजन्ति अन्तर्वार्न्ताशिनो भवन्ति तर्हि तेषामसतां कामवासनाभिर्दुष्टान्तःकरणानां प्राणिनां हृदि गतोऽपि भवान् अस्मृतकण्ठमणिरिव दुरधिगमो दुष्प्रापः। यथा कण्ठे स्थितो मणिः विस्मृतश्चेद्दुरधिगमो भवति तथा असुतृपयोगिनां तु अनपगतान्तकात् अनिवृत्तात् मृत्योः अनधिरूढमप्राप्तं पदं स्वरूपं स्थानं वा यस्य तस्माद्भवतश्चेत्युभयतोऽप्यसुखमिहामुत्र च दुःखमेव लोकाराधनधना-

र्जनादिप्रयासात् भोगवैभवप्राकट्यभयाच्चेह तावन्महद्दुःखं भगवन्निष्ठाभावेनाविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनभगवद्दण्डरूपनरकादिप्राप्तेरमुत्र च दुःखमेवेत्यर्थः । "कामान् यः कामयते मन्यमानः स कर्मभिर्जायते तत्र तत्र" इत्यादिश्रुतेः ॥ ३९ ॥ ननु "एष नित्यो महिमा ब्राह्मणस्य न कर्मभिर्वर्द्धते नो कनीयान्" इत्यादिश्रुत्या यतेः किमपि कृत्यं नास्तीति किमिति यतिर्निन्द्यते तत्राह—त्वदवगमीति ॥ हे सगुण त्वदवगमी भवदुत्थशुभाशुभयोः गुणविगुणान्वयान् न वेत्ति तर्हि देहभृतां गिरश्च न वेत्ति यतः अनुयुगं गीतपरम्परया मनुजैः अन्वहं श्रवणभृतस्त्वं तेषामपवर्गगतिः भवसि इत्यन्वयः । त्वामवगच्छति जानातीति त्वदवगमी भवतः कर्मफलदातुरीश्वराद्धेतोरुत्थयोः फलजननाय समुपस्थितयोः शुभाशुभयोः प्राचीनपुण्यपापात्मककर्मणोर्गुणविगुणान्वयान् फलभूतसुखदुःखसंबन्धान् न वेत्ति नानुसन्धत्ते तथा तर्हि देहभृतां देहाभिमानिनां गिरः निदास्तुतिवाक्यानि । यद्वा । प्रवृत्तिनिवृत्तिकरीर्विधिनिषेधलक्षणाः गिरः न वेत्ति विगतदेहाद्यभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः । युक्तं चैतत् यतः अनुयुगं प्रतियुगं या सगुणस्य तव गीतपरम्परा उपदेशसन्ततिस्तया सत्सम्प्रदायानुसारेण मनुजैरन्वहमनुदिनं श्रवणेन भृतः चेतसि धृतस्त्वं तेषामपवर्गगतिर्मोक्षरूपा गतिर्भवसि एतदुक्तं भवति ये तावत्तत्त्वज्ञा जीवन्मुक्ता दुःखसुखाद्यनुसन्धानरहितास्तेषां तु न कर्माधिकारः । ये च निरन्तरं भवत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवत्पदानां न विधिनिषेध-

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ॥ अनुयुगमन्वहं सगुणगीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥ द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचया ननु
सावरणाः ॥ ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ ४१ ॥

किङ्करता । ये तु मर्यादास्थितौ योग्या अपि वेदोक्तमर्यादां हित्वा योगादिच्छलेनेन्द्रियलालनलालसास्तेषामुभयतो दुःखमिति ॥ ४० ॥ तदेवं स्तुतिमुपसंहरन्त्यः भगवतोऽपारिमितमहत्त्वं च बोधयन्त्यः श्रुतयस्तादृशस्य विभोरवाङ्मनसागोचरत्वादविषयत्वेनैव ज्ञानमाहुः—द्युपतय इति ॥ द्युपतयः एव ते अन्तं न ययुः तथा अनन्ततया हेतुना त्वमपि अन्तं न ययिथ । ननु अहो यदन्तरा सावरणाः अण्डनिचयाः वयसा कालेन खे रजांसि इव सहैव वान्ति ननु पर्यायेण । यत् यतः भवन्निधनाः श्रुतयोऽपि अतन्निरसनेन त्वयि हि फलन्ति इति पिण्डान्वयः । एवेत्यप्यर्थे । द्युपतयः स्वर्गलोकपतयो ब्रह्मादयोऽपि ते तव अन्तं पारं नैव ययुः नैव प्रापुः । किंबहुना अनन्ततया हेतुना त्वमप्यात्ममहिम्नोऽन्तं न यासि । न च तर्हि कथं सर्वज्ञतेति शङ्क्यम् । अनन्तस्यानन्ततया ज्ञानमेव सर्वज्ञत्वावहं तस्य परिच्छिन्नतया ज्ञानस्य भ्रमत्वेनाज्ञत्वावहत्वादिति भावः । ननु अहो यस्य तवान्तरा मध्ये सावरणाः उत्तरोत्तरं दशगुणपृथ्व्यादिसप्तावरणयुक्ता अण्डनिचयाः ब्रह्माण्डसमूहा वयसा कालेन वान्ति परिभ्रमन्ति तत्रापि सहैकदैव नतु पर्यायेण । यथा खे आकाशे वायुना रजांसि परिभ्रमन्ति । तथा श्रुतयश्च "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्च" इत्यादि ।

अत एव भवति त्वयि निधनं समाप्तिर्यासां तास्तथा निरवधिकनिषेधा संभवादवधिभूतं त्वां लक्षयन्त्यः श्रुतयोऽप्यतत्स्थूलत्वादिनिरसनेन त्वयि फलन्ति तात्पर्यवृत्त्या पर्य- वस्यन्ति नतु साक्षात्प्रतिपादयन्ति । अतन्निरसनश्रुतयश्च " अस्थूलमनणु ह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवाय्वनाकाशम् " इत्याद्याः ॥ ४१ ॥ इतीति ॥ ब्रह्मणः पुत्राः सनकादय इत्यनेन प्रकारेणैतत् आत्मानुशिष्यते शिक्ष्यते येन तदात्मानुशासनं वेदस्तुत्यात्मकमाश्रुत्यात्मनो गतिं तत्वं ज्ञात्वा सिद्धाः कृतार्थाः सन्तः अथानन्तरं गुरुरूपं सनन्दनमानर्चुः पूजयामासुः ॥ ४२ ॥ इतीति ॥ इत्येवंभूत उक्तप्रकारकः अशेषाणां सर्वेषां समाम्नायानां वेदानां पूर्वकाण्डानां पुराणानामुपनिषदामुत्तरकाण्डानां च रसः रस इव सारभूतोऽर्थः पूर्वजातैर्वृद्धैः व्योमयानैः सर्वनिरपेक्षतयाकाशचारिभिर्महात्मभिः सनकादिभिः समुद्धृतः निर्णीतः ॥ ४३ ॥ त्वमिति ॥ हे ब्रह्मदायाद ब्रह्मैव दायमिव अयत्नप्राप्यमत्ति सेवत इति तथा ब्रह्मपुत्रेति वा त्वं च त्वमपि एतत् नृणां जीवानां ये कामाः वासनाविशेषाः मोक्षप्रतिबन्धकाः तेषां भर्जनं निवर्तकमात्मानुशासनं श्रद्धया विश्वासेन चित्ते धारयन् कामं यथेष्टं गां भूमिं तदुपलक्षितान् लोकान् चर पर्यट ॥ ४४ ॥ एवमिति ॥ हे राजन् आत्मवान् आत्मानुभववान् श्रुतधरः श्रुतस्यानुसन्धानपरः

भगवानुवाच ॥ इत्येतद्ब्रह्मणा पुत्रा आश्रुत्यात्मानुशासनम् ॥ सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥ इत्यशेषसमा- म्नायपुराणोपनिषद्रसः ॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥ त्वं च तद्ब्रह्मदायाद श्रद्धयात्मानुशासनम् ॥ धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ४४ ॥ श्रीशुक उवाच ॥ एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीर- व्रतो मुनिः ॥ ४५ ॥ नारद उवाच ॥ नमस्तस्मै भगवते कृष्णायाऽमलकीर्तये ॥ यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ४६ ॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७ ॥

वीरव्रतः नैष्ठिकः स मुनिर्नारदः एवमृषिणा श्रीनारायणेनादिष्टमुपदिष्टमात्मतत्त्वं श्रद्धया गृहीत्वा आनन्देन पूर्णः श्रीनारायणं प्रत्याह स्म ॥ ४५ ॥ सर्वश्रुतितात्पर्यं श्रीकृष्णे- वधार्य तुष्टः श्रीकृष्णाभेदेन तदवतारं स्वगुरुं श्रीनारायणं नमस्यति—नम इति ॥ यो भगवान् सर्वभूतानामभवाय संसारदुःखनिरासाय उशतीः कमनीयाः कलाः मूर्तीः धत्ते तस्मै अमलकीर्तये भगवते कृष्णाय श्रीकृष्णरूपाय तुभ्यं नमः ॥ ४६ ॥ इतीति ॥ महामनाः आनन्दितचित्तो नारदः इत्येवमाद्यमृषिं श्रीनारायणं तथा तस्य शिष्यां- श्चानम्य ततः स्थानात् मे मम साक्षात् पितुः द्वैपायनस्याश्रममगात् साक्षात् पितुरिति योनिव्यवधानं विना जनकस्य अग्निमन्थनावसरे कथंचिदरणिपतितरेतस उत्पन्न- त्वात् । ब्रह्मवैवर्ते तु । " व्यासपत्न्या उदरे बहुवर्षाणि स्थितः व्यासेनार्थितोऽपि मायाभिया न निर्गतः ततः कृष्णेन मातेयं ते बहुदुःखिताऽतो निर्गच्छेत्युक्त उवाच । यदि त्वया माया दूरीक्रियते तदा निर्गच्छेयम् " इति श्रीकृष्णेन तथाङ्गीकृते निष्क्रम्य प्रव्रजित इत्युक्तम् । तत्पक्षे साक्षादधुनाधिष्ठितमाश्रमम् ॥ ४७ ॥

सभाजित इति ॥ कृतः आसनस्य परिग्रहः स्वीकारो येन स भगवता व्यासेन सभाजितः पूजितः तस्मै द्वैपायनाय तत् नारायणस्य मुखात् श्रुतं श्रुतिगीतं वर्णयामास । सतु मह्यमुपदिष्टवानित्यर्थाज्ज्ञेयम् ॥ ४८ ॥ इतीति ॥ हे राजन् नोऽस्मान् प्रति त्वया अनिर्देश्ये निर्गुणे ब्रह्मणि श्रुतयः कथं चरन्तीति यः प्रश्नः कृतस्तदुत्तरतया यथानिर्देश्ये निर्गुणे ब्रह्मणि मनः श्रुतिश्च चरेत्तथेत्येतत् श्रुतिगीतं मया वर्णितम् । मनःशब्दाभिप्राय उक्तः ॥ ४९ ॥ समस्तवेदस्तुत्यर्थं संगृह्यानुस्मारयति—य इति ॥ यः अस्य विश्वस्य उत्प्रेक्षकः एवमनुशायिनां समस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादिशपणीयमिति संकल्पकः इति निमित्तत्वमुक्तम् । सङ्कल्पस्य तदनुसारिव्यापारं विना व्यर्थत्वात्परमेश्वरस्य सत्यसंकल्पत्वात् एवमालोच्य अस्य आदिमध्यनिधनेषु कार्येषु यो वर्तते एतेन उपादानत्वमुक्तम् । ननु प्रकृतिपुरुषावुपादाननिमित्ते प्रसिद्धे इति चेत्तत्राह यश्चाव्यक्तजी-वयोरीश्वरः तयोरपि मूलकारणं स एव इत्यर्थः । प्रवेशनियमने दर्शयति य इदं ब्रह्माण्डं सृष्ट्वा ऋषिणा यदर्थमेतत्सृष्टं तेन ऋषिणा सृष्टे कार्ये अहमिति दर्शनादृषिर्जीवः तेन सह तदनुप्रविश्य पुरः शरीराणि जीवानां भोगायतनानि चक्रे । ततश्च ताः पुरः शास्ति तेषां भोगान् ददत् परिपालयति उपासकस्य कैवल्यरूपो भवति इत्याह । यं सम्पद्य

सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया ॥
यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥ ४९ ॥ योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविश्य ऋषिणा
चक्रे पुरः शास्ति ताः ॥ यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥
इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे नारायणनारदसंवादे वेदस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ राजोवाच ॥
देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ॥ प्रायस्ते धनिनो भोजा नतु लक्ष्म्याः पतिं हरिम् ॥ १ ॥

प्राप्यानुशयी जीवः अजां कार्यकारणरूपाम् अविद्यां जहाति । यथा कौ लीयत इति कुलायं सुप्तशरीरवन्तमन्ये पश्यन्ति सतु सुप्तः न शरीरं पश्यति एवं जीवन्मुक्तमन्ये देहवन्तं पश्यन्ति स तु न किञ्चित्पश्यति । तं कैवल्येन अप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिः मूलकारणं माया येन तम् अभयं भयनिवर्तकं हरिम् अजस्रमनवरतं ध्यायेत् । अत्र चाभिन्ननिमित्तोपादानत्वोक्त्या समन्वयाविरोधाध्यायार्थः । हरिं ध्यायेदिति साधनाध्यायार्थः । यं सम्पद्य जहात्यजामिति फलाध्यायार्थश्च दर्शितः ॥ ५० ॥ स्वान्तर्गताप्रमितसत्वनिकायनानाक्षोभैरपि क्वचन न क्षुभितस्वरूपम् ॥ आक्रान्तसर्वजगतीकमगाधमच्छं किंचित्तदस्तु भवताममृताय वस्तु ॥ १ ॥ इति श्रीकृष्णसेवार्थसान्वि-तार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमे सप्ताशीतितमे व्यधात् ॥ ८७ ॥ अष्टाशीतितमे विष्णुर्मुक्तिं दिशति सेवितः ॥ विभूतिमन्यो देवोत्र श्लोकाः सार्द्धाः सर्वीर्द्धयः ॥ सप्तोवाचेति वाचो द्वाचत्वारिंशदनुष्टुभः ॥ ८८ ॥ देवेति ॥ देवादीनां मध्ये ये जनाः अशिवं भुजगादिधारणेनामङ्गलवेषं शिवं भजन्ति ते प्रायः धनिनो भोजा भोगभाजश्च

भवन्ति विरक्तानां मुनीनां तथात्वाभावात् प्रायग्रहणम् । ये तु लक्ष्म्याः सम्पदधिष्ठात्र्याः पतिं सकलसम्पद्भोगादिविशिष्टं हरिं भजन्ति ते तु धनादिसम्पन्ना न भवन्ति किंतु प्रायेण दरिद्रा निर्भोगाश्च भवन्तीत्याशयः ॥ १ ॥ एतदिति ॥ विरुद्धेति शेषे कर्मणि षष्ठ्यौ । विरुद्धं शीलं स्वभावो ययोस्तौ प्रभू हरिहरौ भजतां गतिर्विरुद्धा फलं विरुद्धं भवति योग्यं त्वन्यथेत्याशयः । स्फुटं शेषम् ॥ २ ॥ शिव इति ॥ शश्वत् शक्त्या युतः गुणसाम्यावस्थप्रकृत्युपाधिना नित्यमुक्तेश्वराविर्भावविशेषः नित्यानन्दरूपपुरुष एव शिवः ईश्वरोऽपि गुणक्षोभे त्रिलिङ्गो भवति अन्योन्योपमर्देन गुणत्रैविध्यात् अतः प्रकृतिगुणैः संवृत इति अहमहंकारः श्रीशिवाधिष्ठेयः वैकारिकः सात्विकः तैजसो राजसः तामसश्चेत्येवं त्रिधा तामसाहङ्काराद्यधिष्ठातैव शिवादिनामकः अतस्तदधिष्ठाता सोऽपि गुणयुक्तः अतो विभूतीनां त्रिगुणकार्यत्वात्तद्भजनाद्विभूतिप्राप्तिरित्याशयः । तस्यैव सात्विकत्वेन निर्गुणत्वेन च भजनात् ज्ञानमोक्षावपि भवतः श्रीकृष्णवन्निरुपाधिक एव शिव इति वादे तु नाममूर्तिमात्रे विवादः इति भावः ॥ ३ ॥ तत इति ॥ ततोऽहंकारात् वैकारिकान्मनः तैजसात् दशेन्द्रियाणि तामसात्पञ्च महाभूतानि इत्येवं षोडशविकारा अभवन् अत्रेन्द्रियादिदेवानां तदभेदो विवक्षितः अतः अमीषु अहंकारकार्येषु "दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।" इति प्रजापत्यादिषु मध्ये कंचनापि तमधिदेवम् उपाधावन् भजन् पुरुषः सर्वासां विभूतीनां मध्ये गतिं तेनाधिदैवतेन दातुं शक्यम्

एतद्वेदितुमिच्छामः संदेहोऽत्र महान्हि नः ॥ विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥ २ ॥ श्रीशुक उवाच ॥ शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥ ततो विकारा अभवन्षोडशामीषु कञ्चन ॥ उपाधावन्विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥ हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ॥ स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ५ ॥

ऐश्वर्यादिफलमश्नुते प्राप्नोति । यद्वा । अमीषु मध्ये किंचन औपस्थ्यं जैह्व्यं मानसं वा सुखमुद्दिश्य शिवं भजन् सर्वासामेव विभूतीनां गतिं स्वरूपं प्राप्नोति तेषां परस्परसापेक्षत्वात् । एकप्राप्तावपि सर्वविषयसुखानि प्राप्नोतीत्यर्थः । अतः शिवस्य गुणमयत्वात् सम्पदामपि त्रिगुणमयत्वात्तद्भजने तत्प्राप्तिरिति न तदुक्तो विरोधः । अत्र कञ्चन इत्यत्र किञ्चनेति नपुंसकपाठः ॥ ४ ॥ हरिरिति ॥ हरिर्हि विष्णुस्तु निर्गुणः प्रकृतेः परः साक्षात् भगवान् स सर्वदृक् सर्वज्ञः उपद्रष्टा साक्षिमात्रं तं भजन् पुरुषो निर्गुणो मुक्त एव भवेत् क्वचित्संस्कारवशात् ध्रुवादौ विभूतिरपि तथापि सत्वगुणस्यानावरकत्वादन्ततो विवेकेन मुक्तौ न संदेहः । अत्र श्रीस्वामिपादानां कारिकाः ।" वस्तुतो गुणसंबन्धे रूपद्वयमिहेष्यते । तद्धर्मायोगयोगाभ्यां बिम्बवत्प्रतिबिम्बवत् ॥ गुणाः सत्वादयः शान्तघोरमूढाः स्वभावतः । विष्णुब्रह्मशिवानां च गुणयन्तृस्वरूपिणाम् ॥ नातिभेदो भवेद्भेदो गुणधर्मैरिहांशतः । सत्वस्य शान्त्या नो जातु विष्णोर्विक्षेप मूढ ते ॥ रजस्तमोगुणाभ्यां तु भवेतां ब्रह्मरुद्रयोः । गुणोपमर्दतो भूयस्तदंशानां च भिन्नता ॥ अतः समग्रसत्वस्य विष्णोर्मोक्षकरी मतिः । अंशतो भूतिहेतुश्च तथानन्दमयी स्वतः ॥ अंशतस्तारतम्येन ब्रह्मरुद्रादिसेविनाम् । विभूतयो भवन्त्येव शनैर्मोक्षोऽ-

ष्यनंशतः ॥ " इति इदमेवाभिप्रेत्योच्यते । " श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः, सत्वं यस्य प्रिया मूर्त्तिः " इति । " त्रयाणामेकभावानां यो न पश्यति वै भिदाम् । " इत्यादि । इति सर्वं समञ्जसम् । तत्तद्भक्तानां तु कलहो द्रोहमात्रम् ॥ ५ ॥ निवृत्तेष्विति ॥ अश्वमेधेषु निवृत्तेषु समाप्तेषु सत्सु युष्मत्पितामहो राजा युधिष्ठिरः भगवतः कृष्णात्सकाशात् धर्मान् शृण्वन् तमच्युतं परिपूर्णज्ञानं प्रतीदं त्वत्पृष्टमेवापृच्छत् ॥ ६ ॥ स इति ॥ प्रीतः प्रभुर्भगवान् स कृष्णः तस्मै शुश्रूषवे युधिष्ठिरायाह स्म । यो नृणां निःश्रेयसार्थाय यदोः कुलेऽवतीर्णः ॥ ७ ॥ यस्येति ॥ यस्याहमनुगृह्णामि तस्य धनं शनैः हरिष्ये हरामि यं नानुगृह्णामि तस्मै ददामि अयमर्थः । यो विषयान्परिजिहीर्षुरपि कथंचित् विषयेषु विषज्जते क्लिश्यति च तस्य विषयापहार एवानुग्रहः । यथाश्रुते ध्रुवादीनामैश्वर्ये विरोधात् । अथ वा प्रथमं कामानुरूपा विभूतीर्दत्वा शनैर्विषयभोगावसाने निर्वेदमुत्पाद्य हरिष्यामि अनुग्रहं कर्तुमिति शनैरिति सहसा हरणे महाकष्टं स्यादित्याशयः । शनैर्हरणे तु क्रमेणोदासीनः स्यादित्याशयः । ततो धनापहाराद् दुःखदुःखितं परस्पराग्रस्तम् अधनं तं स्वजनास्त्यजन्ति तिरस्कुर्वन्ति ॥ ८ ॥ स इति ॥ स यदा बन्धूनामाग्रहादिना पुनरपि धनाय यतते तदाप्यहं तस्य तदुद्यमं नाशयामि ततश्च

निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ॥ शृण्वन्भगवतो धर्मानपृच्छदिदमच्युतम् ॥६॥ स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ॥ नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥ ७ ॥ श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ॥ ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ॥ ८ ॥ स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ॥ मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥ तद् ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ॥ अतो मां सुदुराराध्यं हित्वान्यान्भजते जनः ॥ १० ॥ ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ॥ मत्ताः प्रमत्ता वरदान्विस्मरन्त्यवजानते ॥ ११ ॥ श्रीशुक उवाच ॥ शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ॥ सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ १२ ॥

स मदनुग्रहेण वितथोद्योगो निष्फलोद्यमः धनेहया धनार्थव्यापारेणापि निर्विण्णः स्यात् विरक्तो भवति । तस्य च मत्परैः मद्भक्तैः सह कृतं मैत्रं येन तस्य मदनुग्रहं करिष्ये करोमि ॥ ९ ॥ तदिति ॥ तद्ब्रह्म परममत्यन्तं सूक्ष्मं चिन्मात्रं सन्मात्रम् अनन्तकं देशकालवस्तुपरिच्छेदरहितम् अतो मद्भजने मदनुग्रहेण वैभवनाशात् सूक्ष्मत्वेन दुर्ज्ञेयत्वाच्च मां दुराराध्यं हित्वा मोक्षमरोचयन् अत्यासक्तो जनोऽन्यान् देवान् भजते । यद्वा । स यदेति सार्द्धश्लोकमेकान्वयम् । तत्र स यदेत्यादि प्राग्वत् । मदनुग्रहं मद्रूपमनुग्रहं करिष्ये मद्रूपमाह—तद्ब्रह्मेत्यादि । ततः अत इत्याद्यर्द्धं प्राग्वत् ॥ १० ॥ तत इति ॥ ततो भजनात् आशु तुष्यन्तीत्याशुतोषास्तेभ्यो रुद्रादिभ्यो लब्धया राज्यादिश्रियो नाना सम्पद उद्धताः उत्पथाः मत्ताः गर्विताः प्रमत्ताः अनवहिताश्च सन्तस्तान्वरदान् विस्मरन्ति अवजानते तदवज्ञां च कुर्वन्ति ॥ ११ ॥ एतदेवेति हासेन स्फुटयितुं शुक आह—शापेति ॥ अङ्ग हे राजन् शापप्रसादयोर्ब्रह्मादय ईशाः समर्थाः तत्र सद्य एव शापः प्रसादश्च यस्य तथाभूतः शिवो ब्रह्मा चेति । अच्युतः विष्णुस्तु नैवंविधः किं त्वनुग्रहैकस्वभावः

कश्चिन्निग्रहोऽपि फलतोऽनुग्रह एवेत्याशयः ॥ १२ ॥ अत्रेति ॥ अत्रैव सद्यः शापप्रसादत्वे निदर्शनतयेमं पुरातनमितिहासमुदाहरन्ति वृद्धाः । शेषं स्पष्टम् ॥ १३ ॥ वृक इति ॥ दुर्मतिः शकुनेः पुत्रः वृको नाम असुरः पथि नारदं दृष्ट्वा त्रिषु ब्रह्मविष्णुरुद्रेषु देवेषु आशुतोषम् आशु शीघ्रं कस्तुष्यति प्रसीदतीति पप्रच्छ ॥ १४ ॥ स इति ॥ स नारदः तम् आदिदेश शशंस । गिरिशं शिवमुपाधाव आराधय आशु सिध्यसि शीघ्रमेव फलभाग्भविष्यसि । तत्र हेतुमाह स गिरिशः अल्पेनैव गुणेनाराधनेन तुष्यति अल्पेनैव दोषेणाप-राधेन कुप्यति च अतोऽपराधो वर्जनीय एव ॥ १५ ॥ दशास्येति ॥ बन्दिनोरिव स्तुवतोर्दशास्यबाणयोरतुलमनुपममैश्वर्यं दत्त्वा ततः ताभ्यामेव सुसंकटं तिरस्कारमाप । तत्र रावणेन तस्यैव कैलासोत्पाटनं कृतं बाणेन तु पुरपालकत्वेन वृतस्तच्चकारेति ज्ञेयम् ॥ १६ ॥ इतीति ॥ इत्येवं नारदेनादिष्टः सोऽसुरो वृकः केदारक्षेत्रे स्वगात्रतो मांसं छित्त्वा तेनात्मनः क्रव्येण मांसेन हविषा जुह्वानः शानजार्षश्वानरू वा । तमग्निमुखं हरमुपाधावत् आराधितवान् ॥ १७ ॥ देवेति ॥ एवं प्रतिदिनं जुह्वानोऽपि देवस्य तस्यो-

अत्र चोदाहरन्तीममितिहासं पुरातनम् ॥ वृकासुराय गिरिशो वरं दत्त्वाऽऽप सङ्कटम् ॥ १३ ॥ वृको नामासुरः पुत्रः शकुनेः पथि नार-दम् ॥ दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥ स आह देवं गिरिशमुपाधावाशु सिद्ध्यसि ॥ योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥ दशास्यबाणयोस्तुष्टः स्तुवतोर्बन्दिनोरिव ॥ ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम् ॥ १६ ॥ इत्यादि-ष्टस्तमसुर उपाधावत्स्वगात्रतः ॥ केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥ १७ ॥ देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ॥ शि-रोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥१८॥ तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात् ॥ निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९ ॥ तमाह चाङ्गाऽलमलं वृणीष्व मे यथाभिकामं वितरामि ते वरम् ॥ प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयात्मा भृशमर्द्यते वृथा ॥ २० ॥

पलब्धिं दर्शनमप्राप्य निर्वेदाद्वैराग्यान्मरिष्यामि कार्यं वा साधयिष्यामीति निश्चित्य सप्तमे दिने तस्मिन् केदारकुण्डे स्नात्वा तेन तीर्थजलेन क्लिन्ना मूर्धजा यस्य तत्स्वशिरः स्व-धितिना परशुना खड्गेन वा अवृश्च्यत् छेत्तुमारब्धवान् ॥ १८ ॥ तदेति ॥ तदा महाकारुणिकः स धूर्जटिः शिवः अनलात् मूर्तिमानग्निरिवोत्थितो देदीप्यमानः स्वदोर्भ्यां तद्भुजयोर्निगृह्य शिरश्छेदं न्यवारयत् । यथा वयं कंचिद्दुःखेन मर्तुकामं वारयामस्तथेत्यर्थः । स च वृकः तस्य धूर्जटेः स्पर्शनादेव भूयः पुनः उपस्कृता निर्व्रणा आकृतिः शरीरं यस्य तथाभूतो बभूव ॥ १९ ॥ तमिति ॥ तं वृकासुरमाह स्म च । अङ्ग हे वृक शिरश्छेदनेनालमलं पूर्णं न तत्प्रयोजनमस्तीत्यर्थः । मे मत्तो यथाभिकामं यथाभिलषितं वरं वृणीष्वाहं ते तुभ्यं वितरामि ददामि । अहं तु तोयेन जलमात्रेणापि प्रपद्यतां भक्तानां शतार्षः प्रीयेय प्रीतो भवामि । त्वया वृथैवात्मा देहो भृशमर्द्यते पीड्यते ॥ २० ॥

देवमिति ॥ पापीयान्स चैवमुक्तो देवं प्रति भूतभयावहं प्राणिभयंकरं वरं वव्रे । यस्येत्यादि स्पष्टम् । वीप्सया देवादिसर्वसङ्ग्रहः सकृत्त्वनिरासश्च ॥ २१ ॥ तदिति ॥ हे भारत तत्तस्य वचनं श्रुत्वा लोकभयङ्करत्वात् रुद्रो दुर्मना इव एवार्थे । अहेरमृतं सर्पाय क्षीरं यथा प्रहसन् ॐ तथास्त्विति तस्मै वरं ददे ॥ २२ ॥ इतीति अर्द्धम् ॥ इति शिवेनोक्तः नूनं गौर्या हरणे लालसः साभिलाषः बभूव । स इति ॥ स असुरः तस्य वरस्य परीक्षार्थं सत्यमुक्तमनृतं वेति निश्चयार्थं शम्भोर्मूर्ध्न्येव स्वहस्तं धातुमारेभे । स च शिवः सर्वभूतमङ्गलाशंसी स्वकृताद्वरदानात् अबिभेत् लोकानां कष्टं विचिन्त्य भीतोऽभूत् । अन्यथा अन्तर्हितोऽभविष्यदिति भावः । अबिभ्यत् इति पाठस्त्वार्षः ॥२३॥ तेनेति ॥ अतस्तेनासुरेणोपसृष्टः अनुगतः संत्रस्तः अत एव सवेपथुः सकम्पश्च सन् दिवो भूमेश्च यावदन्तं तावत् पराधावत् ततश्च काष्ठानां दिशामुदक् उत्तरतः श्वेतद्वीपगमनेच्छया उदगात् जगाम ॥ २४ ॥ अजानन्त इति ॥ सुरेश्वरा ब्रह्मादयश्च प्रतिविधिं तद्भयनिवृत्त्युपायमजानन्तस्तूष्णीमासन् । ततश्च शिवस्तमसः परम् अविद्यारहितम्

देवं स वव्रे पापीयान्वरं भूतभयावहम् ॥ यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ २१ ॥ तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत ॥ ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥ २२ ॥ इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ॥ स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ॥ स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥ २३ ॥ तेनोपसृष्टः संत्रस्तः पराधावन्सवेपथुः ॥ यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥ २४ ॥ अजानन्तः प्रतिविधिं तूष्णीमासन्सुरेश्वराः ॥ ततो वैकुण्ठमगमद्भास्वरं तमसः परम् ॥ २५ ॥ यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ॥ शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥ २६ ॥ तं तथाव्यसनं दृष्ट्वा भगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया ॥ २७ ॥ मेखलाजिनदण्डाक्षैस्तेजसाग्निरिव ज्वलन् ॥ अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥

अत एव भास्वरं प्रकाशबहुलं वैकुण्ठं श्वेतद्वीपमगमत् । बदरिकाश्रममित्येके । श्वेतद्वीपस्य भूगतत्वेऽपि तमसः परत्वं श्रीकृष्णमूर्तिवदेवेति तोषणी ॥ २५ ॥ यत्रेति ॥ यत्र श्वेतद्वीपे न्यस्तदण्डानां त्यक्तभूतद्रोहाणां शान्तानां न्यासिनां परमा गतिः परमफलभूतः साक्षान्नारायण आस्ते । यं नारायणं गतो जनो यतः सकाशात्पुनः संसारे नावर्तत इति ॥ २६ ॥ तमिति द्वयम् ॥ तथा तादृशं व्यसनं दुःखं यस्य तं रुद्रं दृष्ट्वा वृजिनार्दनो दुःखापहारी भगवान्नारायणः योगमायया स्वशक्त्या बटुको ब्रह्मचारी भूत्वा मेखलादिभिरुपलक्षितः तेजसाग्निरिव ज्वलन् देदीप्यमानः कुशपाणिर्दूरादेव वैकुण्ठात् प्रत्युदियात् तदभिमुखमाविर्भूतः । ततश्च विनीतवत् भिक्षुकवत्सावधानो भवेत्युक्त्वा अभिवादयामास स्वस्याभिवादनं कारयामास । यद्वा । अस्माकं ब्रह्मदर्शिनां सर्वभूतान्येवाभिवाद्यानि भवांस्तु ज्ञानी तपस्वी चेति बटोर्ममाभिवाद्य एवेति द्योतयामास । स्वयं चाह स्मेति शेषः ॥ २७ ॥ २८ ॥

शाकुनेयेति ॥ हे शाकुनेय व्यक्तं निश्चितं भवान् श्रान्तोऽस्ति किं किमर्थं दूरमागतः अतः क्षणं विश्रम्यताम् । यतोऽयमात्मा देहः पुंसः सर्वकामधुक् सर्वपुरुषार्थहेतुः अतो मा पीडयेति ॥ २९ ॥ यदीति ॥ युष्मद्व्यवसितं युष्माभिर्निश्चितं कार्यं यदि नोऽस्माकं श्रवणायालं योग्यं तर्हि हे प्रभो भण्यतां यतो धृतैः सहायतया गृहीतैः पुंभिः सहैव जनः प्रायशः स्वार्थान् समीहते साधयति एकाकिना कार्यं न सिध्यति अतो यथाशक्ति तत्रोपकारमहमपि करिष्यामीति भावः ॥ ३० ॥ एवमिति ॥ स्पष्टम् ॥ ३१ ॥ एवं चेदिति ॥ एवं चेत् तद्वाक्यं वरदानात्मकं वयं न श्रद्दधीमहि सत्यमिति न विश्वसिमः । प्रेतपिशाचराट् यः शिवः दक्षशापात्पैशाच्यं पिशाचानामिव वृत्तिं प्राप्तः ॥ ३२ ॥ यदीति ॥ अङ्ग हे दानवेन्द्र वो युष्माकं यदि तत्र जगद्गुरौ विश्रम्भः जगत्पूज्यत्वात्तद्वचने विश्वासोऽस्ति तर्हि आशु स्वशिरसि हस्तं न्यस्य

श्रीभगवानुवाच ॥ शाकुनेय भवान्व्यक्तं श्रान्तः किं दूरमागतः ॥ क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक् ॥ २९ ॥ यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ॥ भण्यतां प्रायशः पुंभिर्धृतैः स्वार्थान्समीहते ॥ ३० ॥ श्रीशुक उवाच ॥ एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मै यथा पूर्वमनुष्ठितम् ॥ ३१ ॥ श्रीभगवानुवाच ॥ एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ॥ यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥ ३२ ॥ यदि वस्तत्र विश्रम्भो दानवेन्द्र जगद्गुरौ ॥ तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ ३३ ॥ यद्यसत्यं वचः शम्भोः कथञ्चिद्दानवर्षभ ॥ तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥ ३४ ॥ इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः ॥ भिन्नधीर्विस्मितः शीर्ष्णि स्वहस्तं कुमतिर्व्यधात् ॥ ३५ ॥ अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ॥ जयशब्दो नमःशब्दः साधुशब्दोऽभवद्दिवि ॥ ३६ ॥ मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ॥ देवर्षिपितृगन्धर्वा मोचितः संकटाच्छिवः ॥ ३७ ॥

प्रतीयतां तद्वचनं परीक्ष्यताम् ॥ ३३ ॥ यदीति ॥ यदि शम्भोर्वचः कथञ्चित् असत्यम् अनृतं स्यात् तदा हे दानवर्षभ असद्वाचमेनं रुद्रं जहि ताडय । यत् यतस्ताडनात् पुनरनृतं न वक्ता न वक्ष्यति । अन्यथान्यानप्यनृतं वदन्वञ्चयिष्यत इत्यर्थः ॥ ३४ ॥ इत्थमिति ॥ एवंभूतैश्चित्रैर्भ्रमकैः सुपेशलैरतिरम्यैर्भगवतो वचोभिर्भिन्ना भ्रंशिता धीर्यस्य अत एव विस्मृतः विस्मृतवरदानार्थः कुमतिः सोऽसुरः स्वशीर्ष्णि स्वहस्तं व्यधात् निहितवान् शीर्षन्नार्षः ॥ ३५ ॥ अथेति ॥ अथ तत्क्षण एव वज्रेणाहत इव भिन्नशिरा अपतत् तदा च दिवि नमआदिशब्दा अभवन् ॥ ३६ ॥ मुमुचुरिति ॥ पापे पापाचारे वृकासुरे हते सति भगवति देवादयः पुष्पवर्षाणि मुमुचुः । एवं च भगवता शिवः संकटान्मोचितः ॥ ३७ ॥

मुक्तमिति युग्मम् ॥ संकटान्मुक्तं च गिरिशं भगवानभ्याह स्म । अहो देव हे महादेव स्वेन पाप्मनैवायं पापः पापाचारो हतः । हे ईश महत्सु त्वद्भक्तेष्वपि कृतकिल्बिषः कृतापराधः को नु जन्तुः क्षेमी स्यात् सुखी न स्यादेव । जगद्गुरौ जगत्पूज्ये विश्वेशे त्वयि कृतागस्को जन्तुः क्षेमी न स्यादिति तु किमु वक्तव्यम् ॥ ३८ ॥ ३९ ॥ य इति ॥ अव्याकृतशक्त्युदन्वतः अप्राकृतशक्तिसमूहस्य साक्षात्परमात्मनः परस्य हरेश्चरित्रम् एवंप्रकारकं गिरित्रमोक्षं कथयेच्छृणोति वा स संसृतिभिर्नानायोनिसंचारैः तथा अरिभिः संसारकारणैः कामादिभिः शत्रुभिश्च विमुच्यते ॥ ४० ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमस्याष्टाशीतितमे व्यधात् ॥ ८८ ॥ नवाशीतितमेऽन्येभ्यो देवेभ्यो हरिमुत्तमम् ॥ भृगुर्निरचिनोदत्र श्लोकाः पर्वतषण्मिताः ॥ सूतोवाचेति वाक्यानि द्वाशंततिरनुष्टुभः ॥ ८९ ॥ सरस्वत्या इति ॥ हे राजन् सरस्वत्याः नद्यास्तटे ऋषयः सत्रमासत सत्रानुष्ठानार्थमुपविविशुरित्यर्थः । तेषां त्रिषु ब्रह्मविष्णुरुद्रेषु को महानिति वितर्कः संशयः समभूत् ॥ १ ॥ तस्येति ॥ हे नृप तस्य महत्त्वस्य

मुक्तं गिरिशमभ्याह भगवान्पुरुषोत्तमः ॥ अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३८ ॥ हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ॥
क्षेमी स्यात्किमु विश्वेशे कृतागस्को जगद्गुरौ ॥ ३९ ॥ य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ॥ गिरित्रमोक्षं कथये-
च्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे दशमस्कन्धोत्तरार्धे रुद्रमोक्षं नामाष्टाशीतितमोऽ-
ध्यायः ॥ ८८ ॥ श्रीशुक उवाच ॥ सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ॥ वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥ तस्य जिज्ञा-
सया ते वै भृगुं ब्रह्मसुतं नृप ॥ तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद् ब्रह्मणः सभाम् ॥ २ ॥ न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया ॥ तस्मै
चुक्रोध भगवान्प्रज्वलन्स्वेन तेजसा ॥ ३ ॥ स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ॥ अशीशमद्यथा वह्निं स्वयोन्या वारिणात्मनः ॥ ४ ॥

जिज्ञासया ते ऋषयस्तस्य महत्त्वस्य ज्ञप्त्यै ज्ञानार्थं ब्रह्मसुतं भृगुं प्रेषयामासुः । पितृत्वभ्रातृत्वाभ्यां ब्रह्मशिवपक्षपातिनमेव प्रेषितवन्तः स च भृगुः परीक्षार्थं प्रथमं ब्रह्मणः सभामभ्यगात् ॥ २ ॥ नेति ॥ सत्वगुणोऽस्यास्ति न वेति परीक्षार्थं तस्मै ब्रह्मणे प्रह्वणं नमस्कारं प्रह्वशब्दादाचारे क्विप् ततो ल्युट् । स्तोत्रं च न कृतवान् ततश्च तत्कृतामवज्ञां ज्ञात्वा भगवान् ब्रह्मा स्वेन तेजसा प्रज्वलंस्तस्मै भृगवे चुक्रोध ॥ ३ ॥ स इति ॥ प्रभुर्विवेकी स आत्मभूः ब्रह्माऽऽत्मजाय भृगवे आत्मनि मनसि उत्थितं मन्युं क्रोधमात्मना विवेकात्मिकया बुद्ध्या अशीशमत् शान्तं कृतवान् । यथा स्वयोन्या अग्निकारणात् अरणेरुत्थितं वह्निं कश्चित् प्रभुर्वारिणा शमयति तद्वदित्यर्थः । यद्वा स्वं वह्निः योनिः कारणं यस्य तेन वारिणा स्त्रीत्वमार्षम् । यद्वा । स्वस्यैव योन्या रूपान्तरेणाभिव्यक्तिस्थानेन स्वकार्येणेत्यर्थः । तेन यथा कश्चिद्वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः । यद्वा । स्वस्य वह्नेर्योन्या कारणेन वारिणेव क्रोधस्य कारणेन आत्मनैव क्रोधं शमयामास "अग्नेराप" इति श्रुतेः ।

वारि वह्नेः कार्यम् अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमिति श्रुतेर्वारि वह्नेः कार्यमप्युच्यत इति उभयार्थः । अत्र ब्रह्मणि मानसमपराधं कृतवान् ततोऽपि श्रीमहेश्वरे वाचिकमपराधं ततोऽपि श्रीविष्णौ शारीरमपराधं कृतवान् ॥ ४ ॥ तत इति ॥ ततश्च स भृगुः कैलासमगमत् । महेश्वरो देवः भ्रातरं तं भृगुं मुदा परिरब्धुमालिङ्गितुं समारेभे । स च भृगुस्त्वं चिताभस्मादिधारी उत्पथगोऽसीति वदन् तत्परिरम्भणं नैच्छत् तच्छ्रुत्वा महादेवश्चुकोप ॥ ५ ॥ शूलमिति ॥ कोपात्तिग्मलोचनः सन् शूलमुद्यम्य तं हन्तुमारेभे । देवी पार्वती पादयोः पतित्वा गिरा स्तुत्यादिरूपया तं प्रसादयामास ॥ ६ ॥ अथो इति ॥ अथो यत्र देवो जनार्दनः अस्ति तद्वैकुण्ठलोकं जगाम । तत्र श्रिय उत्सङ्गे शयानं जनार्दनं वक्षसि पदा अताडयत् । अत्र शयानं तत्रापि पत्न्या उत्सङ्गे तत्रापि वक्षसि मर्मणि तत्रापि पदा न तु हस्तादिनेत्यपराधस्याधिक्यम् । वैकुण्ठलोकश्चायं विकुण्ठासुतनिर्मितः । “ वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः । ” इति प्रागुक्तेः । नतु महावैकुण्ठः ॥ ७ ॥ तत इति ॥ ततः लक्ष्म्या सह सतां गतिर्भगवान् उत्थाय स्वतल्पा-

ततः कैलासमगमत्स तं देवो महेश्वरः ॥ परिरब्धुं समारेभे उत्थाय भ्रातरं मुदा ॥ नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ॥५॥ शूलमुद्यम्य
तं हन्तुमारेभे तिग्मलोचनः ॥ पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ॥६॥ अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ शयानं श्रिय
उत्सङ्गे पदा वक्षस्यताडयत् ॥ ७ ॥ तत उत्थाय भगवान्सह लक्ष्म्या सतां गतिः ॥ स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ॥ ८ ॥
आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ॥ अजानतामागतान्वः क्षन्तुमर्हथ न प्रभो ॥९॥ पुनीहि सहलोकं मां लोकपालांश्च मद्गतान् ॥
पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥ १० ॥ अतीव कोमलौ तात चरणौ ते महामुने ॥ इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन
पाणिना ॥ ११ ॥ अद्याहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम् ॥ वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १२ ॥ श्रीशुक उवाच ॥
एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ॥ निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १३ ॥

दवरुह्य मुनिं शिरसा ननाम ॥ ८ ॥ आहेति ॥ आह स्म च हे ब्रह्मन् ते तव स्वागतम् । अत्रास्मिन्नासने क्षणं निषीद उपविश । हे प्रभो वो युष्मानागतान् अजानतां नोऽस्माकमपराधं क्षन्तुमर्हसि ॥ ९ ॥ पुनीहीति ॥ तीर्थानां गङ्गादीनामपि तीर्थकारिणा पावित्र्यकारिणा परमपवित्रेण स्वपादोदकेन सहलोकं लोकेन वैकुण्ठेन चतुर्दशभिर्लोकैर्वा सहितं मां मद्गतान् लोकपालांश्च पुनीहि ॥ १० ॥ अतीवेति ॥ हे तात हे महामुने ते चरणावतीव कोमलौ वज्रकर्कशमद्वक्षःस्पर्शेन परिपीडिताविति शेषो ज्ञेयः । क्वचित्पुस्तके ईदृशः पाठ एवास्ति क्वापि अतीवेत्यर्द्धमपि नास्ति । इत्युक्त्वा स्वेन पाणिना विप्रचरणौ मर्दयन् पुनराह स्म ॥ ११ ॥ अद्येति ॥ हे भगवन् अद्याहं लक्ष्म्या एकान्तभाजनं नियताश्रय आसं यतः भवत्पादस्पर्शेन हतमंहः पापं यस्य तस्य मे वक्षसि भूतिर्लक्ष्मीः सदा वत्स्यति ॥ १२ ॥ एवमिति ॥ वैकुण्ठे विष्णौ एवं

ब्रुवति सति तस्य मन्द्रया गम्भीरया गिरा निर्वृतः सुखितः अत एव तर्पितः भक्त्या उत्कण्ठः बाष्परुद्धकण्ठः अश्रूणि लोचनयोर्यस्य स भृगुस्तूष्णीं बभूवेति शेषः ॥ १३ ॥ पुनरिति ॥ हे राजन् ब्रह्मवादिनां मुनीनां सत्रं पुनराव्रज्य स्वेन यदनुभूतं दृष्टं ब्रह्मादित्रयाणां वृत्तं तद्भृगुस्तेभ्योऽवर्णयत्॥१४॥ तदिति ॥ तद्भृगुणा वर्णितं निशम्याथानन्तरं विस्मिताः अपराधातिरेकेऽपि भगवतो निर्विकारत्वेन नम्रीभावेन चाश्चर्ययुक्ताश्छिन्नसंशया महत्त्वे संशयरहिता मुनयो विष्णुमेव भूयांसं श्रद्दधुः सर्वोत्कृष्टत्वेन निश्चितवन्तः । तच्च युक्तमेव । यतः यस्मिन् विष्णौ शान्तिः क्रोधलोभादिराहित्यं यतश्चाभयं संसारभयनिवृत्तिर्भवति ॥१५॥ पुनर्विष्णुं विशिनष्टि—धर्म इत्यादिभिः ॥ यस्मात् धर्मः प्रवर्तते साक्षात्कारात्मकं ज्ञानं तदन्वितं वैराग्यं च भवति । वैराग्यं च चतुर्विधमिति पाठे तच्चातुर्विध्यमेवं द्रष्टव्यम् । विषयांस्त्यक्तुमिच्छतोऽप्यशक्नुवतः विषयसम्मानेच्छात्यागो यतमानाख्यमाद्यम्।विषयाणां लवणादिव्यतिरेकेणापि वृत्तिर्व्यतिरेकाख्यं द्वितीयम् । तत्रापि मनसि रागशैथिल्ये बाह्येन्द्रियैरेव विषयसेवनमेकेन्द्रियाख्यं तृतीयम् । तत्राप्यौ

पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १४ ॥ तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ॥ भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १५ ॥ धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च तदन्वितम् ॥ ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥ मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ॥ अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १७ ॥ सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १८ ॥ त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः ॥ गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥ १९ ॥ ॥ श्रीशुक उवाच ॥ एवं सारस्वता विप्रा नृणां संशयनुत्तये ॥ पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २० ॥

दासीन्यं वशीकाख्यं तुर्यम् । अन्ये तु चतुर्विधपुरुषार्थानामुपेक्षारूपं चतुर्विधं वैराग्यमाहुः । तथा यस्मात् अणिमादिभेदेन अष्टधा ऐश्वर्यं च भवति आत्मनः श्रोतृजनान्तःकरणस्य पापात्मकं मलमपहन्तीति तथाभूतं यस्य यशः अस्ति ॥ १६ ॥ मुनीनामिति ॥ मुनीनां मननशीलानां न्यस्तदण्डानां त्यक्तप्राणिद्रोहाणां शान्तानां समचेतसाम् अकिंचनानां सर्वतो विरक्तानां साधूनां यं विष्णुं परमां गतिमाहुः ॥ १७ ॥ सत्वमिति ॥ यस्य विष्णोः सत्वं प्रिया मूर्तिः ब्राह्मणास्तु इष्टदेवताः । यं च अनाशिषः निष्कामाः शान्ता निपुणबुद्धयो भजन्ति ॥ १८ ॥ त्रिविधेति ॥ यद्यपि तस्य भगवतः गुणिन्या मायया सृष्टा राक्षसा असुराः सुरा इति त्रिविधा आकृतयो मूर्तयः सन्ति तथापि तस्य सत्वं सत्वमूर्तिस्तीर्थसाधनं पुरुषार्थहेतुः ॥ १९ ॥ कथोपसंहाराय श्रीशुक उवाच केचित्तु भूयांसं श्रद्दधुर्विष्णुमित्यतः परं यतः शान्तिरित्यादितीर्थसाधनमित्यन्तं सरस्वतीतीरवासिमुनीनां वचस्तदनन्तरं शुक उवाचेत्याहुः—एवमिति ॥ एवं सारस्वताः सरस्वतीतीरवासिनो विप्रा नृणां संशयस्य नुत्तये निवृत्तये विष्णोर्महत्त्वं निर्णीय

तस्य पुरुषस्य पदाम्भोजसेवया तद्गतिं गतास्तत्स्वरूपं प्राप्ताः ॥ २० ॥ इत्येतदिति ॥ मुनेर्व्यासस्य तनयः शुकस्तस्यास्यपद्मं मुखकमलं तस्य गन्धः संबन्धो यस्मिंस्तत्पीयूषम् अमृतमिव स्वादु "गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः।" इति कोषः। भवभयं भिनत्तीति भवभयभित् इत्येवं पूर्ववर्णितमेतत् परस्य पुंसो विष्णोः सुश्लोक्यं प्रशंसा-योग्यं महत्त्वं यः पान्थः संसारपथे वर्तमानः श्रवणपुटैरभीक्ष्णं पुनः पुनः पिबति सेवते सोऽध्वभ्रमणं संसरणं तत्परिश्रमं च जहाति। ततः परं भ्रमणाभावात् तदानन्देन प्राचीनदुःखविस्मृतेश्च ॥ २१ ॥ एकदेति ॥ स्पष्टम् ॥ २२ ॥ विप्र इति ॥ पुत्रमरणात् दीनं दुःखितं मानसं यस्य सः अत एवातुरो व्याकुलचित्तः स विप्रो मृतकं पुत्रं गृहीत्वा राज्ञ उग्रसेनस्य द्वार्युपधायेदं प्रोवाच ॥ २३ ॥ ब्रह्मेति ॥ ब्राह्मणान् द्वेष्टीति तथा तस्य शठा वञ्चनपरा धीर्यस्य तस्य लुब्धस्य विषयेषु आत्मा यस्य तस्य क्षत्रबन्धोः क्षत्रियाधमस्य अस्य राज्ञः कर्मदोषान्मे अर्भकः पुत्रः पञ्चत्वं गतो मरणं प्राप्तः ॥ २४ ॥ हिंसेति ॥ हिंसैव विहारो यस्य तं दुष्टं शीलं स्वभावो यस्य तम्

सूत उवाच ॥ ॥ इत्येतन्मुनितनयास्यपद्मगन्धपीयूषं भवभयभित्परस्य पुंसः ॥ सुश्लोक्यं श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति ॥ २१ ॥ श्रीशुक उवाच ॥ एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ॥ जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ २२ ॥ विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ॥ इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २३ ॥ ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः ॥ क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः ॥ २४ ॥ हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम् ॥ प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥ एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च ॥ विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥ तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके ॥ परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥ किंस्विद् ब्रह्मंस्त्वन्निवास इह नास्ति धनुर्धरः ॥ राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते ॥ २८ ॥ धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः ॥ ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः ॥ २९ ॥

अजितेन्द्रियं नृपतिं भजन्त्यः प्रजा दरिद्रा अत एव नित्यदुःखिताश्च सत्यः सीदन्ति क्लिश्यन्तीत्यर्थः ॥ २५ ॥ एवमिति ॥ स विप्रर्षिः एवमेव द्वितीयं तृतीयादिं च मृतं बालं नृपद्वारि विसृज्य संस्थाप्य तां ब्रह्मद्विष इति पूर्वोक्तां गाथां वाक्यमगायत तद्गार्षः। मयि न कश्चिद्दोषः अतो राजदोषेणैव मे पुत्रा म्रियन्त इति वारंवारं चुक्रोशेत्यर्थः ॥ २६ ॥ तामिति ॥ कर्हिचिन्नवमे बाले परेते मृते सति राजसमीपस्थितकेशवान्तिके स्थितोऽर्जुनस्तां गाथामुपश्रुत्य एकान्ते ब्राह्मणं समभाषत ॥ २७ ॥ किमिति ॥ हे ब्रह्मन् किंस्वित् किमर्थं वृथा रोदिषि यतस्त्वन्निवासे धनुर्धरो राजन्यबन्धुः क्षत्रियाभासोऽपि नास्ति। ब्रह्मण्यस्य शूरस्य तु का वार्तेत्यर्थः। एते तु सत्रसमाजे मिलिता ब्राह्मणा इव आसते तिष्ठन्ति ॥२८॥ तदेवाह—धनेति ॥ यत्र येषु जीवत्सु सत्सु धनादिभिरपृक्ता वियुक्ता ब्राह्मणाः शोचन्ति ते वै राजन्यस्य वेषेण रूपेण नटा इव असुम्भराः केवलं

स्वप्राणपोषणपरा एव जीवन्ति जीविकां सम्पादयन्ति ॥ २९ ॥ अहमिति ॥ हे ब्रह्मन् इह स्थितोऽहं दीनयोर्वां युवयोः प्रजां जनिष्यमाणं पुत्रं रक्षिष्ये । यद्यनिस्तीर्णप्रतिज्ञः स्यां तदाग्निं प्रवेक्ष्ये तेन हतं कल्मषम् अनृतभाषणपातकं यस्य तथाभूतो भवेयम् तत्पुत्ररक्षणादहतकल्मषः अग्निं प्रवेक्ष्ये इति वा ॥ ३० ॥ संकर्षण इति युग्मम् ॥ यद् मदपत्यं संकर्षणादयस्त्रातुं न शक्नुवन्ति तज्जगदीश्वरैरेतैरपि कर्तुमशक्यं मदपत्यत्राणात्मकं कर्म कथं नु भवान् कर्तुं शक्नुयादिति शेषः । अतो बालिश्यान्मौर्ख्यादेव त्वं तच्चिकीर्षसि अतो वयं न श्रद्दध्महे न विश्वसिमः ॥ ३१ ॥ ३२ ॥ नेति ॥ कार्ष्णिरेव प्रद्युम्नोऽपि चकारादनिरुद्धश्च अहं संकर्षणादयो न भवामि किंत्वर्जुनो नाम महाबलपराक्रमवत्तया प्रसिद्धोऽस्मि यस्य मम गाण्डीवं नाम धनुरस्ति ॥ ३३ ॥ मेति ॥ हे ब्रह्मन् त्र्यम्बकस्य शिवस्य मृत्युंजयस्यापि तोषणं मम वीर्यं पराक्रमं मावमंस्थाः तत्राविश्वासं मा कार्षीः । अतो मृत्युंजयतुल्यत्वात् हे प्रभो प्रधने युद्धे मृत्युं विजित्य ते प्रजामानेष्ये अर्जुनस्यापीदृशी गर्वोक्तिर्ब्रह्मण्यदेवस्य विप्रोपेक्षया क्रोधेन दुःखविशेषात् । तेन

अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥ ब्राह्मण उवाच ॥ संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ॥ अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥ तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ॥ चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥ अर्जुन उवाच ॥ नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च ॥ अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥ ३३ ॥ माऽवमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् ॥ मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥ ३४ ॥ एवं विश्रम्भितो विप्रः फाल्गुनेन परन्तप ॥ जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥ प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ॥ पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥ स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ॥ दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे ॥ ३७ ॥

तदुपेक्षा च " द्विजात्मजा मे युवयोर्दिदृक्षुणा " इति वक्ष्यमाणतदुत्कण्ठाप्रतिपालनाय ॥ ३४ ॥ एवमिति ॥ हे परन्तप फाल्गुनेनार्जुनेनेति प्रौढिवादैः विश्रम्भितः विश्वासं प्रापितो विप्रः प्रीतः संस्तत्र पार्थस्यार्जुनस्य वीर्यं निशामयन् पश्यन् शृण्वन्नित्यर्थः । श्रावयन् इति वा स्वगृहं जगाम ॥ ३५ ॥ प्रसूतीति ॥ भार्यायाः प्रसूतिकाले आसन्ने समीपमागते सति आतुरः चिन्ताव्याकुलो द्विजसत्तमो मृत्योः सकाशात् प्रजां पाहि पाहीत्यर्जुनं प्रत्याह स्म । तदर्थमेकाब्दमर्जुनस्य द्वारकायामेव वासः स्वपुरादेव गर्भपूर्तिं ज्ञात्वा पुनस्तत्रागमो वा ज्ञेयः ॥ ३६ ॥ स इति ॥ सोऽर्जुनः शुचि शुद्धमम्भो जलमुपस्पृश्याचम्य ब्राह्मणोपेक्षकत्वेन कृष्णावज्ञया महेश्वरम् इष्टदेवं नमस्कृत्य दिव्यानि अस्त्राणि मन्त्रान् संस्मृत्य सज्जीकृतं गाण्डीवं धनुराददे गृहीतवान् ॥ ३७ ॥

न्यरुणदिति ॥ ततश्च नानास्त्रैर्मन्त्रैर्योजितैः शरैः तिर्यगूर्ध्वमधश्च पार्थः शरपञ्जरं चकार । तेन च सूतिकागारं न्यरुणत् आवृतवान् ॥ ३८ ॥ तत इति ॥ ततश्च विप्रपत्न्याः कुमारः संजातः सच मुहुः रुदन्नपि सद्यस्तत्क्षणमेव विहायसा आकाशमार्गेण सशरीरः अदर्शनमापेदे । अपत्यान्तरस्य मृतदेहलाभोऽभूत् । अस्य तु देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९ ॥ तदेति ॥ तदा च स विप्रः कृष्णसन्निधौ त्रिजयमर्जुनं विनिन्दन्नाह स्म । योऽहं क्लीबस्य षण्ढस्यार्जुनस्य कत्थनं वृथा प्रगल्भभाषणं श्रद्दधे विश्वासितवांस्तस्य मे मौढ्यं मौर्ख्यं पश्यत ॥ ४० ॥ नेति ॥ यस्य ममापत्यं प्रद्युम्नादयः परित्रातुं न शेकुर्न समर्था जातास्तस्यान्यः को वेश्वरः समर्थोऽविता रक्षकः । अत्रापि "नेमं विरिञ्च्यो न भव" इत्यादिवदन्वयो योज्यः ॥ ४१ ॥ धिगिति ॥ अतो मृषावादम् अनृतवक्तारमर्जुनं धिक् आत्मश्लाघिनः आत्मस्तुतिशीलस्य तस्य धनुर्गाण्डीवमपि धिक् यो दुर्मतिरर्जुनो दैवेनेश्वरेणोपसृष्टमन्यत्र नीतं मदपत्यं मौढ्यादानिनीषति आनेतुमिच्छति ॥ ४२ ॥ एवमिति ॥ विप्रर्षाविवं शपति निन्दति सति फाल्गुनोऽर्जुनः विद्यामास्थाया-

न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ॥ त्रिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥ ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ॥ स-द्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥ तदाह विप्रो विजयं विनिन्दन् कृष्णसंनिधौ ॥ मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ४० ॥ न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ॥ यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ ४१ ॥ धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ॥ दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥ एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ॥ ययौ संयमिनीमाशु यत्रास्ते भगवान्यमः ॥ ४३ ॥ विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् ॥ आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥ रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥ ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥ अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥ दर्शये द्विजसूनूंस्ते मावज्ञात्मानमा-त्मना ॥ ये ते हि कीर्तिं विमलां मनुष्याः स्थापयन्ति नः ॥ ४६ ॥

ङ्गीकृत्याशु संयमनीं ययौ । यत्र भगवान् यम आस्ते ॥ ४३ ॥ विप्रेति सार्द्धम् ॥ तत्र विप्रापत्यमचक्षाणः अपश्यन् इन्द्रादिपुरीः ययौ । नाकपृष्ठं स्वर्गोपरितनं लोकं किं बहुनान्यान्यपि गन्तुमशक्यानि धिष्ण्यानि ब्रह्मादिस्थानानि उदायुधः सन् ययौ । अत्र ऐशान्यां गमनमपि ज्ञेयम् । ऐंद्र्यादिनिर्देशस्योपलक्षणत्वात् । केचित्तु स्वगुरुणा शिवे-नापि तन्नयनासम्भवमननात्तत्र न गमनमित्याहुः ॥ ४४ ॥ तत इति ॥ ततस्तस्मादेवं सर्वत्रान्वेषणादपि न लब्धो द्विजसुतो येन अत एव न निस्तीर्णं न सम्पादितं प्रतिश्रुतं येन सः अग्निं विविक्षुः प्रवेष्टुमिच्छुः प्रतिषेधता युक्तिभिः प्रतिषेधं कुर्वता कृष्णेन प्रत्युक्तः निवारितो जातः ॥ ४५ ॥ दर्शये इति ॥ आत्मनैवात्मानं मावज्ञ मावजानीहि आर्षः प्रयोगः । द्विजपुत्रार्थं त्वया म्रियते तांस्ते तुभ्यं दर्शयामि ये निन्दन्ति त एव मनुष्याः ते कीर्त्तिं स्थापयन्ति स्थिरां करिष्यन्ति । वर्तमानसामीप्ये लट् । देवादयस्तु

विदन्त्येवेति भावः।"येनेह कीर्तिं विमलां मनुष्याः स्थापयन्ति न।" इति पाठान्तरम् । स्वामिनां मते तु "ये ते हि कीर्तिं विमलां मनुष्याः स्थापयिष्यन्ति।" इति छन्दोभङ्ग-वान् लट्पाठ एव सम्मतो भाति । पाठान्तरं तु छन्दोभङ्गभयादागन्तुकमिति तदुक्तेः । छन्दोभङ्गभयात्कल्पितमिति तदर्थात् ॥४६॥ इतीति ॥ भगवानीश्वरः कृष्णोऽर्जुनेन सह दिव्यं स्वरथमारुह्य प्रतीचीं दिशमाविशत् प्रययौ ॥४७॥ सप्तेति ॥ सप्त सप्तसङ्ख्याका गिरयो मर्यादा पर्वता येषु तान् सप्तद्वीपान् तथा सप्तसिन्धून् लोकालोकं च पर्वतमतीत्य सुमहत् निबिडं तमः अन्धकारं विवेश ततोऽग्रे सूर्यादिप्रकाशाभावात् । एवं च भगवल्लीलावैभवात् अर्जुनादीनां द्रष्टृश्रोतॄणां चमत्कारपोषणार्थमेव ॥ ४८ ॥ तत्रेति ॥ हे भरतर्षभ तत्र तमसि शैब्यादयोऽश्वा भ्रष्टगतयो बभूवुः ॥ ४९ ॥ तानिति ॥ महायोगेश्वराणामपीश्वरः सर्वोपायसमर्थो भगवान् कृष्णः तान् प्रतिहतगतीनश्वान् दृष्ट्वा सहस्र-सूर्यसदृशप्रकाशं स्वायुधं सुदर्शनचक्रं तेषां पुरः अग्रे प्राहिणोत् प्रायुङ्क्त ॥ ५० ॥ तम इति ॥ गहनं दुष्प्रवेशं सुघोरं भयंकरं कृतं प्रकृतिपरिणामरूपं नतु आलोकाभावमात्रं

इति संभाष्य भगवानर्जुनेन सहेश्वरः ॥ दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥ सप्त द्वीपान्सप्त सिन्धून् सप्त सप्त गिरी-न्थ ॥ लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥ तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥४९॥ तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥५०॥ तमः सुघोरं गहनं कृतं महद्विदार-यद्भूरितरेण रोचिषा ॥ मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥ द्वारेण चक्रानुपथेन तत्तमः परस्परं ज्यो-तिरनन्तपारम् ॥ समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥५२॥ ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृह-दूर्मिभूषणम् ॥ तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ५३ ॥

महत् अपारं तमः भूरितरेण रोचिषा विदारयत् मनोजवं सुदर्शनं निर्विविशे तङ्कर्षः । यथा गुणान् मौर्व्याश्च्युतो रामस्य शरो रावणचमूः सेना विवेश तथेति ॥ ५१ ॥ द्वारे-णेति ॥ चक्रानुपथेन चक्रमनुगतेन द्वारेण चक्रेणैव सप्तावरणभेदनात्तद्रन्ध्रभूतद्वारेण तत्तमः परं तस्मात्तमसः प्रकृत्यावरणात् अष्टमात् परं दूरे वर्तमानम् अनन्तपारं समश्नुवानं व्याप्नुवत् परं श्रेष्ठं भागवतं ज्योतिः परमप्रकाशरूपं प्रसमीक्ष्य प्रताडिते प्रतिहते अक्षिणी यस्य सः फाल्गुनः उभे अक्षिणी पिदधे न्यमीलयत् । आदौ सप्तावरणानि भित्त्वा अष्टमं महान्धकारं प्रकृत्यावरणमपि चक्रेण भिन्नं ततः परं भागवतं ज्योतिर्महाप्रकाशं दृष्ट्वा प्रतिहते नेत्रे अर्जुनो न्यमीलयदिति भावः॥५२॥तत इति॥ततस्तमसः परतो बलीयसा प्रचण्डेन नभस्वता वायुना एजन्तः उच्चलन्तो बृहन्तः ऊर्मयस्तरङ्गा भूषणं यस्य भीषणमिति च पाठः । तथाभूतं महाकालनिर्मितमप्राकृतं सलिलं प्रविष्टः सार्जुनो भग-वान् तत्र सलिलस्याधस्तात् द्युमत्तमं द्युतिमत्सु श्रेष्ठं भ्राजतां मणिमयस्तम्भानां सहस्रेणोपशोभितं कालपुराख्यम् अद्भुतं भुवनं प्रविष्टः।इदं च महाकालपुरं मृत्युञ्जयतन्त्रे ज्ञेयम् ।

" ब्रह्माण्डस्योर्ध्वतो देवि ब्रह्मणः सदनं महत् । तदूर्ध्वं देवि विष्णूनां तदूर्ध्वं रुद्ररूपिणाम् ॥ तदूर्ध्वं च महाविष्णोर्महादेव्यास्तदूर्ध्वगम् । पारे परिमहादेव्याः कालः सर्वभयावहः ॥ ततः श्रीब्रह्मपीयूषवारिधिर्नित्यनूतनः । तस्य तीरे महाकालः सर्वग्राहकरूपधृक् ॥ " इति इत्युक्त्वा " तस्यान्तरे समुद्भासी रत्नद्वीपः शिवाह्वयः । ध्यायेत्तत्र परानन्दं रामोपास्यं परं महः ॥ बल्लवीवल्लभं कृष्णं गोपकन्याः सहस्रशः । " इत्यादि । अत्र ब्रह्मणः सदनं सत्यलोकः विष्णूनां विकुण्ठसुतानां वैकुण्ठः रुद्ररूपिणामित्यहंकारावरणस्थो रुद्रलोकः महाविष्णोरिति महत्तत्वावरणस्थो महादेव्या इति प्रकृत्यावरणस्थो महादेवीलोकः ब्रह्मपीयूषवारिधिः कारणार्णवः महाकालः परव्योमस्थो महावैकुण्ठनाथस्तस्यैव कारणार्णवजलान्तर्गतं भवनं महाकालपुरम् ॥५३॥ तस्मिन्निति ॥ तस्मिन्भवने महाभीमम् अतिभयंकरम् अद्भुतं विस्मयकरं सहस्रं मूर्धानस्तेषु भवाः फणास्तासु ये मणयस्तेषां द्युभिः कान्तिभिर्विभ्राजमानं द्विगुणानि द्विसहस्रसङ्ख्याकानि उल्बणानि भयंकराणि अरुणानीक्षणानि नेत्राणि यस्य तं सिताचलः स्फटिकपर्वतस्तस्याभा इवाभा यस्य तं शितयोऽनीला कण्ठो जिह्वाश्च यस्य तमेवंभूतमनन्ताख्यं शेषं ददर्श ॥ ५४ ॥ ददर्शेति ॥ तस्यानन्तस्य भोगः शरीरमेव सुखकरमासनं यस्य पुरुषोत्तमाः संकर्षणाद-

तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ॥ विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिकण्ठजिह्वम् ॥५४॥ ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ॥ सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५५ ॥ महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ॥ प्रलम्बचार्वष्टभुजं सुकौस्तुभं श्रीवत्सलक्ष्म्या वनमालया वृतम् ॥ ५६ ॥ सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ॥ पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥ ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनमात्तसाध्वसः ॥ तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥ ५८ ॥

यस्तेभ्योऽप्युत्तमं महानुभावं सान्द्रस्य निबिडस्य अम्बुदस्य मेघस्येवाभा यस्य तं शोभने पिशङ्गे पीते वाससी यस्य तं प्रसन्नं वक्त्रं यस्य तं रुचिरे सुन्दरे आयते दीर्घे ईक्षणे यस्य तं विभुं ददर्श । फाल्गुन इति प्रकरणाल्लभ्यम् ॥ ५५ ॥ महेति ॥ महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां या प्रभा तया परिक्षिप्ताः सर्वतः स्फुरन्तः सहस्रम् अनन्ताः कुन्तला यस्य तं प्रलम्बा दीर्घाश्चारवो वर्तुलाश्चाष्टौ भुजा यस्य तं कण्ठस्थेन कौस्तुभेन सहितं श्रीवत्सो लक्ष्म चिह्नं यस्य तं श्रीवत्सलक्ष्म्येति पाठे श्रीवत्सस्य लक्ष्म्या शोभया वनमालया चावृतं युक्तमित्यर्थः । विभुं ददर्शेत्यनुषङ्गः ॥ ५६ ॥ सुनन्देति ॥ सुनन्दादिभिः स्वपार्षदैः तथा मूर्तिमद्भिश्चक्रादिभिर्निजायुधैश्च तथा मूर्तिमतीभिः कीर्तिसहितया अजया मायया अखिलर्द्धिभिरणिमादिविभूतिभिः शक्तिभिश्च निषेव्यमाणं परमेष्ठिनां द्विपरार्द्धान्ते मुक्तानां ब्रह्मणां पतिं विभुं ददर्श ॥ ५७ ॥ ववन्द इति ॥ तमजं जन्मादिविकारशून्यमात्मानं स्वस्यैव मूर्त्यन्तरमच्युतः श्रीकृष्णो ववन्दे ननाम । तथा तस्य दर्शनेन जातं साध्वसं संभ्रमो यस्य सः जिष्णुरर्जुनश्च तं

ननाम । ततो बद्धाञ्जली तौ कृष्णार्जुनौ प्रति परमेष्ठिनां प्रभुर्भूमा पुरुषः ऊर्जया गम्भीरया गिरा आह स्म । अत्र गोवर्द्धनपूजायां "तस्मै नमो व्रजजनैः सह चक्रेत्मनात्मने ।" इतिवल्लीलाकौतुकमात्रार्थमेव ॥ ५८ ॥ द्विजेति ॥ युवयोर्युवां दिदृक्षुणा द्रष्टुमिच्छता मया द्विजात्मजा उपनीताः स्वसमीपमानीताः यतो धर्मस्य गुप्तये युवां मे कलयावतीर्णाविति अर्जुनवञ्चनार्थं यथा भगवांस्तं ननाम तथा सोऽपि छत्रिन्यायेन कलावतीर्णावित्युक्तवान् । अतो धर्मरक्षार्थम् अवनेर्भारभूतान् असुरान् हत्वा त्वरया झटिति ममान्तिकं मम समीपमिहेतम् आगच्छतम् वास्तवोऽर्थस्तु हे कलावतीर्णौ कलाभिः स्वशक्तिभिः सहैवावतीर्णौ भूयः पुनरपि युवाम् अवनेर्भरान् असुरान् हत्वा मे अन्ति ममान्तिकं तान् प्रस्थापयितुं त्वरयेतं त्वरेर्ण्यन्तात्लिङि रूपं मित्त्वात् ह्रस्वत्वम्। अन्तीत्यव्ययं 'क्रियार्थोपपदस्य' इति चतुर्थ्यन्तम् अव्ययत्वाच्चतुर्थ्या लुक्। अत्रागत्य ते मुक्ता भवन्त्विति तद्धाम्नो मुक्तगम्यत्वेन हरिवंशोक्तत्वात् । द्वितीयस्कन्धेऽपि क्रममुक्तिसृतौ अष्टावरणभेदानन्तरमेव मोक्षश्रवणात् ॥ ५९ ॥ पूर्णेति ॥ ऋषभौ श्रेष्ठौ नरनारायणावृषी युवां पूर्णकामावपि स्थित्यै रक्षार्थं लोका जनाः संगृह्यन्ते धर्मे प्रवर्त्यन्तेऽनेन तथा तं धर्ममाचरतां प्रथमपुरुष आर्षः आचरतमित्यपि पाठः । इदं भारतयुद्धात्पूर्वं कृतमपि श्रैष्ठ्यकथनप्रस्तावेनात्रोक्तम् ॥६०॥ इतीति युग्मम् ॥ तौ कृष्णौ कृष्णार्जुनावित्येवं भगवता परमेष्ठिना भूमपुरुषेणादिष्टौ ओमिति तदाज्ञामङ्गीकृत्य तं भूमानं प्रणम्य द्विजपुत्रानादाय संप्रहृष्टौ यथागतं तथा स्वकं धाम न्यवर्तताम् तङ्भाव आर्षः । ततश्च यथारूपं यथावयः पूर्वरूपवयआदिसंपन्नान् पुत्रान् विप्राय ददतुः ॥ ६१ ॥ ६२ ॥ निशाम्येति ॥ वैष्णवं धाम महाकालपुरादिकं निशाम्य दृष्ट्वा परमविस्मयम् अत्याश्चर्यं प्राप्तः पार्थोऽर्जुनः पुंसां यत्किंचित्पौरुषं प्रभावस्तत्सर्वं कृष्णानुकम्पितं श्रीकृष्णकृपालब्धमेवेति मेने अयमत्रा शयः । भूमपुरुषेण श्रीकृष्णदर्शनार्थमेव ब्राह्मणबालानां स्वस्थानानयनं श्रीकृष्णेनाप्यर्जुनमदाहरणाय ब्राह्मणपुत्रमरणं सोढम् अतः श्रीकृष्णेच्छाप्रेरितो मुखरो विप्रः कृष्णस- न्निधावेव निष्ठुरां गाथामगायत । अर्जुनोऽपि सम्यग् विचार्य भूमपुरुषादधिकं श्रीकृष्णैश्वर्यं विलोक्य परमविस्मितोऽभूत् । हरिवंशे चोक्तम् । " मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । " इत्यादि । एतच्चरितसमाप्तौ च " ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि । अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥ " इत्यादि ॥ ६३ ॥

द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ॥ कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमन्तिमे ॥ ५९ ॥ पूर्णकामावपि युवां नरनारायणावृषी ॥ धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम् ॥ ६० ॥ इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ॥ ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥ न्यवर्ततां स्वकं धाम संप्रहृष्टौ यथागतम् ॥ विप्राय ददतुः पुत्रान्यथारूपं यथावयः ॥ ६२ ॥ निशाम्य वैष्णवं धाम पार्थः परमविस्मितः ॥ यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ६३ ॥

इतीति ॥ इत्येवमीदृशान्यनेकानि वीर्याणि अतिमानुषान् पराक्रमान् इह भूलोके प्रदर्शयन् भगवान् कृष्णो ग्राम्यान् विषयान् बुभुजे । ऊर्जितैः पुष्कलदक्षिणैर्मखैर्देवादीन् ईजे च ॥ ६४ ॥ प्रववर्षेति ॥ श्रैष्ठ्यं श्रेष्ठत्वमास्थितो भगवान् ब्राह्मणादिषु प्रजासु अखिलान् कामान् अभिलषितान् विषयान् यथाकालं तत्तदवसरे प्रववर्ष संपादयामास । तत्र दृष्टान्तमाह । यथैव इन्द्रो यथाकालं जलं वर्षति तथेति ॥ ६५ ॥ हत्वेति ॥ अधर्मिष्ठान्नृपान् कांश्चित्स्वयं हत्वा कांश्चिच्चार्जुनादिभिर्घातयित्वा धर्मसुतादिभिर्युधिष्ठिरादिभिरञ्जसा अनायासेन वर्णाश्रमधर्मप्रयुक्तं धर्मं वर्तयामास ॥ ६६ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहाय एकोननवतेः पूरणे व्यधात् ॥ ८९ ॥ चरमे क्रीडनं स्त्रीभिस्तासां प्रेमरसा गिरः ॥ विस्तृतिर्यादवानां च श्लोकास्तत्राभ्रमार्गणाः ॥ उवाचद्वितयं सार्द्धा स्याद् द्वैषष्टिरनुष्टुभाम् ॥ ९० ॥ " मधुरेण समापयेत् " इति न्यायेन लीलाकथनान्ते कृष्णस्य जलविहारवर्णनम् । तत्र प्रथममुद्दीपकत्वेन नगररामणीयकमाह—सुखमिति षट्कम् ॥ सर्वाभिः सम्पद्भिः समृद्धायां वृष्णिपुङ्गवैर्या-

इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ॥ बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥६४॥ प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ॥ यथाकालं यथैवेन्द्रो भगवाञ्छ्रैष्ठ्यमास्थितः ॥ ६५ ॥ हत्वा नृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः ॥ अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥६६॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः ॥ ८९ ॥ श्रीशुक उवाच ॥ सुखं स्वपुर्यां निवसन्द्वारकायां श्रियः पतिः ॥ सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ॥ कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥ नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः ॥ स्वलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥ उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ॥ निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥ रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावद्विचित्ररूपोऽसौ तद्गृहेषु महर्द्धिषु ॥ ५ ॥ प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ॥ वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥

दवश्रेष्ठैः जुष्टायाम् उत्तमो वेषो वस्त्राभरणाद्यलङ्कारो यासां ताभिः नवयौवनेन कान्तिर्यासां ताभिः कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिः तडितामिव द्यौर्द्युतिर्यासां ताभिः स्त्रीभिश्च जुष्टायां मदच्युद्भिर्मतङ्गजैर्नित्यं सङ्कुला व्याप्ता मार्गा यस्यां तस्यां द्वारकायां स्वलंकृतैर्भटैरश्वैः कनकेनोज्ज्वलै रथैश्च नित्यं संकुलमार्गायाम् उद्यानैः पुष्पप्रधानैः उपवनैः फलप्रधानैश्चारामैराढ्यायां सम्पन्नायां पुष्पिता ये द्रुमास्तेषां राजिषु पङ्क्तिषु निर्विशद्भिर्भृङ्गैर्भ्रमरैः विहङ्गैः पक्षिभिश्च समंततः सर्वतो नादितायां द्वारकायां स्वपुर्यां सुखं निवसन् यतः षोडशसाहस्रपत्नीनामेक एव वल्लभः अतस्तावद्विचित्ररूपोऽसौ श्रियः पतिः श्रीकृष्णः महर्द्धिषु महासमृद्धियुक्तेषु प्रोत्फुल्लानां सन्ध्यारात्रिदिनविकासयुक्तानामुत्पलादीनां रेणुभिर्वासितानि अमलानि तोयानि येषु तेषु तथा कूजन्ति द्विजानां पक्षिणां कुलानि गृहारामवाप्यादिसंबन्धीनि येषु तेषु तासां गृहेषु रेमे ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

विजहारेति ॥ तथा ह्रदिनीषु सरस्यादिरूपासु अम्भो विगाह्य महानुदयो वैभवं यस्य सः योषितां योषिद्भिश्च परिरब्ध आलिङ्गितः अत एव कुचकुङ्कुमेन लिप्ताङ्गो विजहार ॥ ७ ॥ उपेति द्वयम् ॥ मृदङ्गादीनि वादयद्भिर्गन्धर्वैस्तथा सूतादिभिश्चोपगीयमानः अच्युतोऽपि जलक्रीडायामस्माभिः पराभूत इति मत्वा हसन्तीभिस्ताभिर्योषिद्भिः स्म-रेचकैः सेचनपात्रैः पिचकारीति प्रसिद्धैः स्मेति पादपूर्तौ । रेचकशब्द एव वा तद्वाची तैः सिच्यमानः स्वयमपि ताः प्रतिषिञ्चन् अच्युतः कृष्णः यक्षीभिः सह यक्षराट् कुबेर इव चिक्रीडे क्रीडितवान् । कर्मव्यतिहारे तङ् ॥ ८ ॥ ९ ॥ ता इति ॥ क्लिन्नानि सिक्तानि वस्त्राणि यासां ताः अत एव विवृता ऊरुकुचप्रदेशा यासां ताश्च उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः स्मरेचकस्य जिहीर्षया हरणेच्छया तं कान्तमुपगूह्यालिङ्ग्य तेन जातस्मरेण य उत्सवः उत्कृष्टो हासस्तेन लसन्ति वदनानि यासां ता विरेजुः ॥ १० ॥ कृष्ण इति ॥ कृष्णस्तु तासां स्तनेभ्यो विषज्जितकुङ्कुमा स्रग्यस्य स क्रीडायामभिषङ्गेणाभिनिवेशेन धुतः कम्पितः कुन्तलवृन्दबन्धो यस्य सः स्वयं

विजहार विगाह्याम्बो ह्रदिनीषु महोदयः ॥ कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥ ७ ॥ उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ॥ वादय-द्भिर्मुदा वीणां सूतमागधबन्दिभिः ॥ ८ ॥ सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः ॥ प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥ ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ॥ कान्तं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥ कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक् क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ॥ सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभप-तिः परीतः ॥ ११ ॥ नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ॥ क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२ ॥ कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ॥ नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १३ ॥ ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम् ॥ चिन्तयन्त्योऽरवि-न्दाक्षं तानि मे गदतः शृणु ॥ १४ ॥

मुहुस्ताः सिञ्चन् युवतिभिः प्रतिषिच्यमानः करेणुभिर्गजीभिः परिवृतो गजराडिव रेमे ॥ ११ ॥ नटानामिति ॥ क्रीडार्थं यानि स्वयं धृतान्यलङ्कारवासांसि तानि गीतैर्वाद्यै-श्चोपजीवन्ति तेषां तेभ्यो नटादिभ्यः कृष्णोऽदात् तथा तस्य स्त्रियश्च ददुः ॥ १२ ॥ कृष्णस्येति ॥ एवं विहरतः कृष्णस्य गत्यादिभिः स्त्रीणां धियो हृताः ॥ १३ ॥ ऊचुरिति ॥ मुकुन्द एवैकस्मिन्धीर्यासां तास्तत्सान्निध्यदशायामपि कामोन्मादात्परोक्षतया तमेवारविन्दाक्षं चिन्तयन्त्यः अगिरः क्षणं धृतमौनाः सत्यः तत उन्मत्ता इव जडम् अनन्वितं यथा भवति तथा यानि वाक्यानि ऊचुस्तानि गदतः कथयतो मे मत्तः शृणु । अत्रापरोक्षपक्षे भगवांस्तच्छ्रवणकौतुकाय तत्रैव स्थित इति ज्ञेयम् । वैचित्र्यवि-प्रलम्भाख्योऽयं भावः । बोपदेवेन मुक्ताफलग्रन्थे प्रकटीकृतः इयं प्रेम्णः षष्ठी भूमिका ॥ १४ ॥

कुररीति ॥ हे कुररि अस्मिन् जगति रात्र्यामीश्वरः श्रीकृष्णः गुप्तः बाह्यविषयादान्तरीकृतो बोधो ज्ञानं यस्य तथाभूतः सन् स्वपिति । त्वं तु विगतनिद्रा सती विलपसि तन्निद्राभङ्गं कुर्वती आक्रोशसि नतु शेषे । तदनुचितमित्यर्थः । अथवा तव नापराधः इत्याहुः । हे सखि वयमिव नलिननयनस्य कृष्णस्य हासेन हसितेन यदुदारं लीलयेक्षितं तेन गाढं यथा भवति तथा निर्भिन्नं चेतो यस्याः तथाभूता कच्चित्त्वमसि ॥ १५ ॥ नेत्रे इति ॥ हे चक्रवाकि नक्तं रात्रौ त्वं नेत्रे निमीलयसि करुणं यथा स्यात्तथा रोरवीषि पुनः पुनः रौषि तत्किमदृष्टबन्धुः अदृष्टपतिरसि किंवा वयमिव दास्यं गता सती अच्युतस्य पादजुष्टां स्रजं कबरेण वोढुं स्पृहयसे ततो व्यग्रचित्तासीति ॥ १६ ॥ भो इति ॥ भो भो उदन्वन् समुद्र अलब्धनिद्रः अधिगतप्रजागरः प्राप्तजागरणश्च त्वं सदा निष्टनसे शब्दं करोषि तङार्षः । तत्किमस्माभिः प्राप्तां दुरत्ययामनिवर्त्यां दशां मोहरूपां त्वमपि गतोऽसि । वाशब्द उपमार्थे । यथा वयं संभोगेन मुकुन्दापहृतकुङ्कुमादिलाञ्छनास्तथा त्वमप्यपहृतश्रीकौस्तुभादिलाञ्छनो लक्ष्यसे ॥ १७ ॥ त्वमिति ॥ हे इन्दो त्वं बलवता

महिष्य ऊचुः ॥ कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ॥ वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ॥ दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥ भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ॥ किंवा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥ १७ ॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ॥ कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥१८॥ किं वा चरितमस्माभिर्मलयानिल तेऽप्रियम् ॥ गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥ मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः ॥ अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ २० ॥

यक्ष्मणा क्षयरोगेण गृहीतः अत एव क्षीणः सन् निजदीधितिभिः स्वकान्तिभिस्तमोऽन्धकारं न क्षिणोषि न विनाशयसि कच्चित् । किं वा यथा वयं तथा त्वमपि मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचिन्तया स्थगितगीः स्तब्धवाक् स्थितोऽसि । नः अस्माभिस्तथैवोपलक्ष्यसे ॥ १८ ॥ किमिति ॥ हे मलयानिल अस्माभिस्ते तव किंवा अप्रियमनिष्टमाचरितं यतस्त्वं गोविन्दस्यापाङ्गैर्नितरां भिन्ने नोऽस्माकं हृदि हृदये स्मरं काममीरयसि प्रेरयसि अतः अप्रियाचरणं विना स्मरोदीरणेनास्मद्व्यथाजननं तवानुचितमित्यर्थः ॥ १९ ॥ मेघेति ॥ हे मेघ आतपहरण श्यामत्वादिसाम्यात् त्वं नूनं यादवेन्द्रस्य कृष्णस्य दयितः प्रियोऽसि अत एव वयमिव तद्विषयकेण प्रेम्णा बद्धो निश्चलः सन् भवांस्तमेव श्रीवत्साङ्कं ध्यायति । ध्याने लिङ्गमाहुः । अस्मद्विधो वयमिव अत्युत्कण्ठः तद्दर्शनाद्युत्साहयुक्तः तत्र हेतुः शबलहृदयः प्रेम्णार्द्रीकृतचित्तस्त्वं

स्मृत्वा स्मृत्वा मुहुर्बाष्पाणामश्रूणां धारा विसृजसि विमुञ्चसि । अहो किमिति तेन त्वया सख्यं कृतं यतस्तस्य प्रकृष्टः सङ्गः दुःखद इति ॥ २० ॥ प्रियेति ॥ हे कोकिलवल्गितकण्ठ वल्गुः कृतः कण्ठो येन तत्संबुद्धिः वल्गुशब्दात्तत्करोतीति णिजन्तात् कः । प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दान् त्वं भाषसे । यद्वा । हे प्रियराव कोकिल अनया गिरा पदानि अस्मद्विरहदुःखत्राणान्येव भाषसे । " पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु । " इत्यमरः । अतो मृतान् सञ्जीवयतीति तथाभूतयानया मधुरया गिरा त्वं मे वद । अद्य ते तव किं प्रियं करवाणीति । अत्र विरहे कोकिलशब्दस्य दुःखदत्वात् प्रियरावेत्याद्याः सर्वा एव विपरीतलक्षणया वक्रोक्त्य एव तेन शब्देन मां दुःखयतस्तव तुण्डमेव धक्ष्यामीति ॥ २१ ॥ नेति ॥ हे क्षितिधर हे पर्वत हे उदारबुद्धे महाबुद्धे त्वं न चलसि न च किंचिद्वदसि अतो नूनं महान्तं कञ्चिदर्थं चिन्तयसे बत तर्हि अपि किं वयं तथा वसुदेवनन्दनस्याङ्घ्रिं स्तनैर्विधर्तुं कामयामहे तथा त्वमपि स्तनतुल्यैः शृङ्गैर्वोढुं कामयसे । एवं चेत्तर्हि तवाप्यस्मदवस्था भविष्यतीति भावः ॥ २२ ॥ शुष्यदिति ॥ हे सिन्धुपत्न्यो नद्यः यद्वत् यथा वयं मधुपतेः कृष्णस्य प्रणयावलोकमप्राप्य मुष्टानि अपहृतानि हृदयानि यासां ताः पुरुकर्शितास्तथा किं

प्रियरावपदानि भाषते मृतसंजीविकयाऽनया गिरा ॥ करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ २१ ॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ॥ अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥ शुष्यद्ध्रदाः कृशतरा बत सिन्धुपत्न्यः संप्रत्यपास्तकमलश्रिय इष्टभर्तुः ॥ यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥ २३ ॥ हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा ॥ किंवा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ २४ ॥

यूयमपि संप्रति ग्रीष्मे इष्टस्य भर्तुः सिन्धोः प्रणयावलोकं मेघद्वारा प्रवाहपूर्तिमप्राप्य शुष्यन्तो ह्रदा यासां ताः तथा अपास्ता निर्गता कमलश्रीः कमलशोभा यासां ताः कर्शिताः स्थ ॥ २३ ॥ तदानीमेव दैवादागतं हंसं दूतं कल्पयित्वाहुः—हंसेति ॥ अङ्ग हे हंस ते स्वागतम् अत्रास्यतामुपविश्यतां पयः क्षीरं पिब शौरेः श्रीकृष्णस्य कथां वार्तां ब्रूहि । त्वां तु तस्य दूतं विदाम विद्मः आर्षोऽयम् । अतः चलं सौहृदं यस्य सः अजितः किं स्वस्त्यास्ते । यश्च नोऽस्मान् प्रति न त्वादृशीं प्रणयिनीं पश्यामीत्यादि पुरोक्तं तत्किं स्मरति । हे क्षौद्र क्षुद्रस्य दूत तं वयं कस्माद्भजामः श्रियमृते इति । या अस्मान् वञ्चयित्वा एकाकिनी रमते तां श्रियं हित्वा कामदं तमेवालापय इहाकारय । स्त्रियामिति जातावेकवचनम् । अस्मासु स्त्रीषु मध्ये किं सैवैकनिष्ठा ननु वयं तथेत्यर्थः।क्षौद्रालापमकामदमिति स्त्रिय इति च पाठान्तरे। क्षौद्रं मधुतद्वन्मधुरालापमात्रं यस्य तम् अकामदम् अरतिप्रदं श्रियमृते वयं कस्माद्भजामः किं त्वनादृता अपि सती सैव तं भजतु एकनिष्ठा एकत्रैव स्वसंमानसिद्धौ निष्ठा यासां तथाभूता मानिन्यः स्त्रियो वयमिति॥ २४॥

इतीति ॥ माधव्यो माधवस्य स्त्रियः इत्येवं योगेश्वरेश्वरे कृष्णे इति क्रियमाणेन ईदृशेनानुपमेयेन भावेन प्रेम्णा परमां गतिं वैष्णवीं मुक्तिं लेभिरे ॥ २५ ॥ श्रुतमात्र इति ॥ उरुभिर्गायैर्गीतैरुरु बहु गीतोऽत एव कथंचिच्छ्रुतमात्रोऽपि वा यः प्रसह्य बलात् स्त्रीणां मनः आकर्षते तदर्थः । साक्षात्पश्यन्तीनां स्वपत्नीनां मनआकर्षणे पुनः किं वक्तव्यम् ॥२६॥ या इति ॥ याः स्त्रियः जगद्गुरुं श्रीकृष्णं भर्तृबुद्ध्या पादसंवाहनादिभिः प्रेम्णा पर्यचरन् सेवितवत्यस्तासां तपः पुण्यमस्माभिः किं वर्ण्यते कथं वक्तुं शक्यते ॥२७॥ एवमिति ॥ सतां गतिः कृष्णः एवं वेदोक्तं धर्मं मुहुरनुतिष्ठन् गृहं धर्मादीनां पदमित्यदर्शयत् ॥ २८ ॥ आस्थितस्येति ॥ गृहमेधिनां गृहस्थानां परं धर्ममास्थितस्य अनुतिष्ठतः कृष्णस्य षोडशेति अत्र अष्टोत्तरेति शेषः । अतः अष्टोत्तरशताधिकं षोडशसाहस्रं महिष्य आसन् ॥ २९ ॥ तासामिति ॥ स्त्रीरत्नभूतानां तासां मध्ये रुक्मिणी-

इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ॥ क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥२५॥ श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ॥ उरुगायोरुगीतो वा पश्यन्तीनां कुतः पुनः ॥२६॥ याः स पर्यचरन्प्रेम्णा पादसंवाहनादिभिः ॥ जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥२७॥ एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ॥ गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥२८॥ आस्थितस्य परं धाम कृष्णस्य गृहमेधिनाम् ॥ आसन्षोडशसाहस्रं महिष्योष्टशताधिकम् ॥२९॥ तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ॥ रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥३०॥ एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान् ॥ यावत्य आत्मनो भार्या अमोघगतिरीश्वरः ॥३१॥ तेषामुद्दामवीर्याणामष्टादश महारथाः ॥ आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३२ ॥ प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेव च ॥ साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः ॥ ३३ ॥ पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः ॥ चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च ॥ ३४ ॥ एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ॥ प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३५ ॥

प्रमुखा या अष्टौ प्रागुदाहृताः पूर्वं कथितास्तासां पुत्राश्चानुपूर्वशः विशेषतः कथिताः ॥ ३० ॥ एकेति ॥ अमोघरतिः अव्यर्थसुरतान्तः " दशास्यां पुत्रानाधेहि " इति श्रुत्यनुसारिसत्यसङ्कल्पः इति भावः । ईश्वरः कृष्णः यावत्य आत्मनो भार्यास्तासु एकैकस्यां दश दश पुत्रान् अजीजनत् तथा चैकं लक्षमशीत्युत्तरैकषष्टिसहस्राणि पुत्रा जाताः ॥ ३१ ॥ तेषामिति ॥ तेषां पुत्राणां मध्ये अष्टादश पुत्रा महारथा अत एव उदारयशसो विपुलकीर्तय आसन् तेषां नामानि मे मत्तः शृणु ॥ ३२ ॥ प्रद्युम्नश्चेति द्वयम् ॥ अनिरुद्धस्यापि गणनात्पुत्रेषु सप्तदशैव महारथा ज्ञेयाः । अथवा अनिरुद्धनामापि कश्चित्पुत्र एव पौत्रस्य पृथक्कथनात् । विरूप इति पूर्वं वरूथनाम्नोक्त इति तोषणी ॥ ३३ ॥ ३४ ॥ एतेषामिति ॥ हे राजेन्द्र एतेषां मधुद्विषः कृष्णस्य पुत्राणां मध्ये प्रथमः पुत्रः रुक्मिणीसुतः प्रद्युम्नः पितृवत् रूपेण गुणैश्च पितृतुल्य आसीत् ॥ ३५ ॥

॥२९४॥

स इति ॥ सच महारथः प्रद्युम्नः रुक्मिणी मातुलस्य दुहितरमुपयेमे तस्मात् प्रद्युम्नात् नागानां हस्तिनां यदयुतं दशसहस्रं तस्य यद्बलं तेनान्वितो युक्तः अनिरुद्धाख्यः पुत्रोऽभूत् ॥ ३६ ॥ स इति ॥ स चाप्यनिरुद्धो रुक्मिणो दौहित्रोऽपि तस्यैव पौत्रीं जगृहे उपयेमे । ततोऽनिरुद्धात् तस्यां वज्रो नाम पुत्रोऽभूत् । यस्तु वज्रो मौसलात् मुसलनिमित्तयदुकुलक्षयात् भगवता अवशेषितः ॥ ३७ ॥ प्रतीति ॥ तस्माद्वज्रात् प्रतिबाहुरभूत् तस्य प्रतिबाहोरात्मजः सुबाहुः सुबाहोर्धर्मसेनाख्यः सुतः अभूत् । तस्य च सुतः श्रुतसेनोऽभूत् । अग्रे वंशानुक्तिः साङ्कर्यादिना वंशलोपारम्भात् इति तोषणीसारे ॥ ३८ ॥ नेति ॥ एतस्मिन्कुले अधना निर्धनाः दरिद्रादयो न जाताः किंतु धनादिसंपन्ना एव जाताः ॥ ३९ ॥ यदुवंशेति ॥ हे नृप विख्यातकर्मणां कर्मभिः प्रसिद्धानामपि यादवानां चिरजीविनां पुरुषेण वर्षायुतैरपि सङ्ख्या कर्तुं न शक्यते ॥ ४० ॥ तिस्र इति ॥ सहस्राणामसङ्ख्यातानां कुमाराणां पाठकाः यदुकुलाचार्याः तिस्रः कोट्यः अष्टाशीतिशतानि चासन्निति श्रुतिः श्रवणमस्ति । तोषणी तु सहस्राणामिति

स रुक्मिणो दुहितरमुपयेमे महारथः ॥ तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६ ॥ स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ॥ वज्रस्तस्याभवद्यस्तु मौसलादवशेषितः ॥ ३७ ॥ प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्य चात्मजः ॥ सुबाहोः शान्तसेनोभूच्छतसेनस्तु तत्सुतः ॥ ३८ ॥ न ह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ॥ अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥ यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ॥ सङ्ख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥ तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ॥ आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥ ४१ ॥ सङ्ख्यानं यादवानां कः करिष्यति महात्मनाम् ॥ यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥ ४२ ॥ देवासुराहवहता दैतेया ये सुदारुणाः ॥ ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४३ ॥

एकैकं सहस्रमेकैकस्याचार्यस्य शिष्या इति सहस्रगुणिताचार्यसङ्ख्यैव कुमारसङ्ख्येत्याह ॥ ४१ ॥ नित्यराजसेवकसङ्ख्यामाह—सङ्ख्यानमिति ॥ यदा प्रत्येकं बहूनध्यापयतामाचार्याणामियं सङ्ख्या तदपि श्रुतिमात्रं नतु सम्यक् ज्ञायते तदा कुमाराणामेव सङ्ख्या कर्तुं न शक्यते कुतः पुनः सर्वेषां यादवानामिति । यत्र येषु मध्ये अयुतानामयुतलक्षेण सह सः राजतया प्रसिद्ध आहुक उग्रसेन आस्ते।अत्रायुतानामिति बहुत्वं कपिञ्जलाधिकरणन्यायेन त्रित्वविशिष्टायां सङ्ख्यायां पर्यवस्यति । तेन अयुतानामयुतलक्षेण शङ्खत्रयेणेत्यर्थः । आस्ते इति लट् नित्यं लीलास्फूर्त्या ॥ ४२ ॥ यादवा द्विविधाः देवाः नित्यपार्षदाश्च तत्र देवानामवतीर्णत्वसङ्ख्यत्वं च सहेतुकमाह—देवेति ॥ देवासुराहवे अमृतार्थं देवासुरसङ्ग्रामे सुदारुणा अतिभयंकरा ये दैतेया हतास्ते मनुष्येषु प्रत्येकं बहुभी रूपैरुत्पन्ना दृप्ता गर्विताश्च सन्तः प्रजा बबाधिरे ॥ ४३ ॥

तदिति ॥ हे नृप तेषां निग्रहाय विनाशाय हरिणा प्रोक्ता आदिष्टा देवाः यदोः कुले अवतीर्णाः तेषां वृष्ण्यन्धकदाशार्हादिरूपेणैकाधिकं शतं कुलं प्रकृतम् । व्यक्तीनामानन्त्यात्कुलस्यैव सङ्ख्या कृता ॥ ४४ ॥ नित्यपार्षदानां ततोप्याधिक्यमाह—तेषामिति ॥ ये च तस्य भगवतोऽनुवर्तिनः आज्ञानुसारिणः सेवकास्ते सर्वे यादवा ववृधुः । धनधामबलादिवृद्धिं प्राप्ताः तङभाव आर्षः।तेषां यादवानां सङ्ख्यायाः प्रभुत्वेन स्वामित्वेन भगवान् हरिरेव प्रमाणं साक्षी अभवत् । अन्येषां तत्सङ्ख्याया बोद्धुमशक्यत्वात् ॥ ४५ ॥ शय्येति ॥ कृष्णचेतसः वृष्णयः शय्यादिषु सन्तं वर्तमानमात्मानं स्वदेहमपि न विदुरन्यविस्मृतेः का वार्ता ॥ ४६ ॥ श्रीकृष्णलीलारत्नाकरं दशमस्कन्धं समापयन् श्रीकृष्णस्यान्यावतारवैलक्षण्यपञ्चकमाह—तीर्थमिति ॥ हे नृप इतः पूर्वं गङ्गैव तीर्थमासीत् अधुना तु यदुषु यदजनि जातं श्रीकृष्णकीर्तिरूपं तीर्थं तदेतत् कर्तृपादशौचरूपं स्वःसरित् गङ्गाख्यं तीर्थमूनं चक्रे । श्रीकृष्णकीर्तिरेव सर्वतीर्थोपरि विराजते इत्येकं चित्रम् । तथा तस्य श्रीकृष्णस्य परमकारुणिकत्वाद्विद्विषः शत्रवः स्निग्धा भक्ताश्च तत्स्वरूपं तत्सायुज्यं ययुः इति द्वितीयम् । तथा यदर्थे लक्ष्म्याः कृपावलोकनार्थमन्येषां ब्रह्मादीनां तपआदि यत्नो भवति सा श्रीर्लक्ष्मीरप्यजितपरा

**तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ॥ अवतीर्णाः कुलशतं तेषामेकाधिकं नृप॥४४॥ तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ॥ ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ४५ ॥ शय्यासनाटनालापक्रीडास्नानादिकर्मसु ॥ न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥ तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः ॥ यन्नामाऽमङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ४७ ॥ जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम् ॥ स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवम् ॥ ४८ ॥**

श्रीकृष्णसेवापरायणा तदधीनेत्यर्थः । इति तृतीयम् । तथा श्रुतम् अथवा गदितम् उच्चारितम् अर्थानुसन्धानं विनापि यस्य नाम अमङ्गलघ्नमिति तुर्यम् । तथा गोत्रेषु तत्तदृषिवंशेषु धर्मो यत्कृतो येन प्रवर्तितो वर्तते । यद्वा । गां सर्वां पृथिवीं त्रायते इति गोत्रस्तादृशश्चतुष्पाद्धर्मो यत्कृतः चतुर्भिर्वर्तसे येन पादैरिति प्रागुक्तेः । इति पञ्चमम् । तस्य कालचक्रं सर्वसंहारककालाभिमतिचक्रं सुदर्शनमायुधं यस्य श्रीकृष्णस्यैतत् क्षितेर्भरहरणं चित्रमसंभाविततयाश्चर्यकरं न भवति ॥ ४७ ॥ जयतीति ॥ जनानां निवास आश्रयभूतः जनेष्वन्तर्यामितया निवासो यस्येति वा देवक्यां जन्मेति वादमात्रं यस्य स यदुवराः पर्षत्सभा यस्य सः दोर्भिर्भुजैरधर्मम् अस्यन् निराकुर्वन् स्थिरचराणां अधिकारिविशेषानपेक्षमेव वृन्दावनगततरुतृणलतादीनां सर्वेषां वृजिनघ्नः संसारदुःखहन्ता तथा शोभनं स्मितं यस्मिंस्तेन श्रीमुखेन व्रजवनितानां गोपीनां पुरवनितानां कुब्जादीनां रुक्मिण्यादीनां च कामदेवं कामश्चासौ दीव्यति जिगीषति संसारमिति देवस्तं भोगद्वारा मोक्षप्रदमित्यर्थः । यद्वा । कामश्चासौ दीव्यति विराजते कामदेवः प्रेमरू-

परस्तं वर्द्धयन् श्रीकृष्णो जयति ॥४८॥ इत्थमिति ॥ अमुष्य कृष्णस्य पदयोरनुवृत्तिमासक्तिमिच्छन् जनः इत्थमुक्तप्रकारेण निजवर्त्मरिरक्षया स्वकृतवेदमार्गरक्षणेच्छया सनि इडभाव आर्षः । आत्ता गृहीता लीलातनुर्येन तस्य परस्य परमेश्वरस्य यदूत्तमस्य तदनुरूपविडम्बनानि मनुष्यावतारयोग्यचेष्टानुकारीणि कर्मकषणानि पापनिवर्तकानि कर्माणि श्रूयात् शृणुयात् ॥ ४९ ॥ मर्त्य इति ॥ मर्त्यो मनुष्यस्तया मुकुन्दस्य श्रीमत्या कथायाः श्रवणकीर्तनोत्पन्नया चिन्तया आसक्त्या अनुसवं प्रतिक्षणमेधितया दुस्तरो यः

इत्थं परस्य निजवर्त्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडम्बनानि ॥ कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥ मर्त्यस्तयानुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तयैति ॥ तद्धाम दुस्तरकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ ५० ॥ इति श्रीभागवते महापुराणे दशमस्कन्धेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां श्रीकृष्णचरितानुवर्णनं नाम नवतितमोऽध्यायः ॥ ९० ॥

कृतान्तस्य कालस्य जवो वेगस्तस्यापवर्गो निवृत्तिर्यस्मात्तत् तस्य धाम एति यदर्था यत् धाम यानुवृत्तिर्वा अर्थः प्रयोजनं येषां ते क्षितिभुजः सकलभूमिपतयोऽपि ग्रामात् राज्यादिकं परित्यज्य श्रवणादिसाधनानुष्ठानार्थं वनं ययुः ॥ ५० ॥ मामेकमेव शरणं व्रज मा स्म शोचीरित्यर्जुनं जिगदिषोः परमस्य पुंसः ॥ तत्कालजातकरुणोद्गतगद्गदत्वह्रस्वाक्षरा जयति मा शुच इत्यसौ वाक् ॥ १ ॥ इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् ॥ गङ्गासहायो दशमस्याध्याये चरमे व्यधात् ॥ ९० ॥

अयं श्रीमद्भागवतस्य दशमस्कन्धोऽन्वयार्थप्रकाशिकाख्यव्याख्यासमेतः कल्याणनगर्यां श्रीकृष्णदासात्मजेन गङ्गाविष्णुना स्वकीये "लक्ष्मीवेंकटेश्वर" मुद्रणागारे मुद्रयित्वा प्रकाशितः । संवत् १९५७ शकाब्दाः १८२२.

पुस्तक मिलनेका ठिकाना—

गंगाविष्णु श्रीकृष्णदास,

लक्ष्मीवेङ्कटेश्वर छापाखाना कल्याण—मुंबई.

॥ अथाच्युताष्टकं प्रारभ्यते ॥ श्रीगणेशाय नमः ॥ अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ॥ श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥ १ ॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाऽऽराधितम् ॥ इंदिरामंदिरं चेतसा सुंदरं देवकीनंदनं नंदनं संदधे ॥ २ ॥ विष्णवे जिष्णवे शंखिने चक्रिणे रुक्मिणीरागिणे जानकीजानये ॥ वल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥ कृष्ण गोविंद हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे ॥ अच्युतानंत हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥ राक्षसक्षोभितः सीतया शोभितो दंडकारण्यभूपुण्यताकारणम् ॥ लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकोनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः ॥ पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ६ ॥ विद्युदुद्योतवान्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् ॥ वन्यया मालया शोभितोरःस्थलं लोहितांघ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयोः ॥ हारकेयूरकं कंकणप्रोज्ज्वलं किंकिणीमंजुलं श्यामलं तं भजे ॥ ८ ॥ अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पुरुषः सस्पृहम् ॥ वृत्ततः सुंदरं कर्तृविश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥ इति श्रीशंकराचार्यविरचितं अच्युताष्टकं संपूर्णम् ॥ अथ श्रीकृष्णस्तोत्रप्रारंभः ॥ वंदे नवघनश्यामं पीतकौशेयवाससम् ॥ सानंदं सुंदरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १ ॥ राधेशं राधिकाप्राणवल्लभं वल्लवीसुतम् ॥ राधासेवितपादाब्जं राधावक्षःस्थलस्थितम् ॥ २ ॥ राधानुगं राधिकेष्टं राधापहृतमानसम् ॥ राधाधारं भवाधारं सर्वाधारं नमामि तम् ॥ ३ ॥ राधाहृत्पद्ममध्ये च वसंतं सततं शुभम् ॥ राधासहचरं शश्वद् राधाज्ञापरिपालकम् ॥ ४ ॥ ध्यायंते योगिनो योगात् सिद्धाः सिद्धेश्वराश्च यम् ॥ तं ध्याये सततं शुद्धं भगवंतं सनातनम् ॥ ५ ॥ सेवंते सततं संतो ब्रह्मेशशेषसंज्ञकाः ॥ सेवंते निर्गुणं ब्रह्म भगवंतं सनातनम् ॥ ६ ॥ निर्लिप्तं च निरीहं च परमात्मानमीश्वरम् ॥ नित्यं सत्यं च परमं भगवंतं सनातनम् ॥ ७ ॥ यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् ॥ योगिनस्तं प्रपद्यंते भगवंतं सनातनम् ॥ ८ ॥ बीजं नानावताराणां सर्वकारणकारणम् ॥ वेदावेद्यं वेदबीजं वेदकारणकारणम् ॥ योगिनस्तं प्रपद्यंते भगवंतं सनातनम् ॥ ९ ॥ इत्येवमुक्त्वा गंधर्वः पपात धरणीतले ॥ ननाम दंडवद्भूमौ देवदेवं परात्परम् ॥ १० ॥ इति तेन कृतं स्तोत्रं यः पठेत्प्रयतः शुचिः ॥ इहैव जीवन्मुक्तश्च परं याति परां गतिम् ॥ ११ ॥ हरिभक्तिं हरेर्दास्यं गोलोके च निरामयः ॥ पार्षदप्रवरत्वं च लभते नात्र संशयः ॥ १२ ॥ इति श्रीनारदपंचरात्रे ज्ञानामृतसारे श्रीकृष्णस्तोत्रं संपूर्णम् ॥ ७ ॥

॥ अथ चतुःश्लोकिभागवतप्रारंभः ॥ ॥ श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् ॥ सरहस्यं तदंगं च गृहाण गदितं मया ॥ १ ॥ यावानहं यथा भावो यद्रूपगुणकर्मकः ॥ तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ॥ पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ॥ तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ ॥ ४ ॥ यथा महांति भूतानि भूतेषूच्चावचेष्वनु॥ प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥५॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः ॥ अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥६॥ एतन्मतं समातिष्ठ परमेण समाधिना ॥ भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥७॥ इति श्रीमद्भागवते महापुराणेष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकिभागवतं समाप्तम् ॥ ॥ अथ दशावतारस्तोत्रप्रारंभः ॥ ॥ श्रीगणेशाय नमः ॥ ॥ चलल्लोलकल्लोलकल्लोलिनीशस्फुरन्नक्रचक्रातिवक्त्रांबुलीनः ॥ हतो येन मीनावतारेण शंखः स पायादपायाज्जगद्वासुदेवः ॥ १२ ॥ धरानिर्जरारातिभारादपारादकूपारनीरातुराधः पतंती ॥ धृता कूर्मरूपेण पृष्ठोपरिष्टे स देवो मुदेवोऽस्तु शेषांगशायी ॥ २ ॥ उदग्रे रदाग्रे सगोत्रापि गोत्रा स्थिता तस्थुषः केतकाग्रे षडंघ्रेः ॥ तनोति श्रियं सश्रियं नस्तनोतु प्रभुः श्रीवराहावतारो मुरारिः ॥३॥ उरोदार आरंभसंरंभिणोसौ रमासंभ्रमाभंगुराग्रैर्नखाग्रैः ॥ स्वभक्तातिभक्त्याभिव्यक्तेन दारुण्यघौघं सदा वः स हिंस्यान्नृसिंह ॥ ४ ॥ छलादाकलय्य त्रिलोकीं बलीयान् बलिं संबबंध त्रिलोकींव लीयः ॥ तनुत्वं दधानां तनुं संदधानो विमोहं मनो वामनो वः स कुर्यात् ॥५॥ हतक्षत्रियासृक्प्रपानप्रमत्तप्रनृत्यत्पिशाचप्रगीतप्रतापः ॥ धराकारि येनाग्रजन्माग्रहारविहारं क्रियान्मानसे वः स रामः ॥ ६ ॥ नतश्रीवसुग्रीवसाम्राज्यहेतुर्दशग्रीवसंतानसंहारकेतुः ॥ धनुर्येन भग्नं महत्काममहंतुः स मे जानकीजानिरेनांसि हंतु ॥ ७॥ घनाद् गोधनं येन गोवर्धनेन व्यरक्षि प्रतापेन गोवर्धनेन ॥ हतारातिचक्री रणध्वस्तचक्री पदध्वस्तचक्री स नः पातु चक्री ॥ ८ ॥ धराबद्धपद्मासनस्थांघ्रियष्टिर्नियम्यानिलं न्यस्तनासाग्रदृष्टिः ॥ य आस्ते कलौ योगिनां चक्रवर्ती स बुद्धः प्रबुद्धोऽस्तु निश्चिंतवर्ती ॥ ९ ॥ दुरापारसंसारसंहारकारी भवन्दश्वचारः कृपाणप्रहारी ॥ मुरारिर्दशाकारधारीह कल्की करोतु द्विषां ध्वंसनं वः स कल्की ॥१०॥ इति श्रीमच्छंकराचार्यविरचितं दशावतारस्तोत्रं संपूर्णम् ॥ अथ वसुदेवकृतश्रीकृष्णस्तोत्रप्रारंभः ॥ श्रीगणेशाय नमः ॥ वसुदेव उवाच ॥ त्वामतींद्रियमव्यक्तमक्षरं निर्गुणं विभुम् ॥ ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ १ ॥ स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् ॥ निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ २ ॥ स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम् ॥ स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ३ ॥ शरीरवंतं सगुणमशरीरं

गुणोत्करम् ॥ प्रकृतिः प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ४ ॥ सर्वेशं सर्वरूपं च सर्वांतकरमव्ययम् ॥ सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ५ ॥ अनंतः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती ॥ यं वा स्तोतुमशक्तश्च पंचवक्त्रः षडाननः ॥ ६ ॥ चतुर्मुखो वेदकर्तायं स्तोतुमक्षमः सदा ॥ गणेशो न समर्थश्च योगींद्राणां गुरोर्गुरुः ॥ ७ ॥ ऋषयो देवताश्चैव मुनींद्रमनुमानवाः ॥ स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवंति ते ॥ ८ ॥ श्रुतयः स्तवनेऽशक्ताः किं स्तुवंति विपश्चितः ॥ विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९ ॥ वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः ॥ भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणांबुजे ॥ १० ॥ विशिष्टपुत्रं लभते हरिदासं गुणान्वितम् ॥ संकटं निस्तरेत्तूर्णं शत्रुभीत्या प्रमुच्यते ॥ ११ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे श्रीकृष्णजन्मखंडे वसुदेवकृतं कृष्णस्तोत्रं संपूर्णम् ॥ ४० ॥

॥ अथ सप्तश्लोकीगीता प्रारभ्यते ॥ श्रीगणेशाय नमः ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ य प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १ ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षांसि भीतानि दिशो द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥ २ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥ सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥ छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव चाहम् ॥ ६ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥ इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता समाप्ता ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥


**गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" छापखाना, कल्याण.**

*Gangavishnu Shrikrishnadas.* Laxmi-Venkateshwar Press.

KALYAN. G. I. P. RY. JUNCTION. BOMBAY PRESIDENCY